॥ चित्रं वटतरोर्मूले शिष्या वृद्धा गुरुर्युवा ॥
॥ गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥१॥

॥ श्रीनागेशनिर्मिता ॥

# मञ्जूषा

श्रीगणेशाय नमः॥ नागेशभट्टविदुषा नत्वा साम्बं शिवं लघुः॥ वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते॥ तत्र वाक्यस्फोटोऽस्तु मु
ख्यः। लोके तस्यैवार्थबोधकत्वात्· तेनैवार्थसमाप्तेश्च। तदुक्तं न्यायभाष्यकृता। पदसमूहो वाक्यमर्थसमाप्ताविति॥ अत्र पदं
सुबन्तं तिङन्तं च। तेन तत्समूह इत्यर्थः। समाप्तावित्यस्य समर्थमिति शेषः। तत्र प्रतिवाक्यं संकेतग्रहासंभवात् तदन्वाख्या
नस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि विभज्य पदे प्रकृतिप्रत्ययविभागानुकल्पनयैव प्रविभज्य कल्पिताभ्यामन्वय·
व्यतिरेकाभ्यां तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्माचार्याः। एतदेवाभिप्रेत्य विभाषासुपइति सूत्रे कैयटः। अ
न्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्तापरिकल्पनादित्याह॥ तत्तदवयववत्तत्तदर्थबोधनेन समुदायस्य समुदा
यार्थस्य बोधने तात्पर्यमृषीणां· स्पष्टं चेदमर्थवत्सूत्रे भाष्यकैयटयोः। क्लृप्तिवाक्यादीनां बलाबलविचारकल्पनार्थं च तत्क
ल्पनेति बोध्यम्। तत्र शास्त्रप्रक्रियानिर्वाहको वर्णस्फोटः। प्रकृतिप्रत्ययास्तत्तदर्थस्य वाचका इति तदर्थः। उपसर्गनिपातधा
त्वादिविभागोऽप्येवमेव काल्पनिकः तस्यैवान्वाख्यानस्य लाघवेन निर्वाहाय स्थानिनो लादय आदेशास्तिबादयश्च कल्पिता ए
व· तेषामर्था अपि कल्पिता एव· तत्र स्थानिनामर्थाः ऋषिभिः कण्ठत उक्ताः आदेशानां च स्थान्यर्थाभिधानसमर्थस्यैवादेशते
ति न्यायेन ते· मुख्यं वाचकत्वं तु तथा कल्पनया बोधितेन तत्समुदायरूपे पदे वाक्ये वा· लौकिकानां तत एव बोधात्· एतदेवा

श्रित्यभूवादिसूत्रेभाष्येभाववचनोधातुरितिलक्षणेसतिभत्ययेभाववचनत्वंतद्वचनाद्धप्रत्ययइत्यन्योन्याश्रयमाशङ्
क्यअनाश्रित्यभाववचनत्वंप्रत्ययः नित्यत्वाच्छब्दानामित्युक्तं पारमार्थिकं नाश्रीयते·कल्पितंत्वाश्रीयतएवेतिकैय
टः एवंचस्थानिनांवाचकत्वमादेशानांवेत्यादिविचारोनिष्फलएव।कल्पितवाचकत्वस्योभयत्रापिसत्त्वात्·व्याकर
णभेदेनस्थानिनांभेदेपिनक्षतिः लिपीनांभेदइवेतिदिक्. तत्राप्तोपदेशरूपःशब्दःप्रमाणम्।आप्तोनामानुभवेनव
स्तुतत्त्वस्यकार्त्स्न्येननिश्चयवान्।रागादिवशादपिनान्यथावादीयःसइतिचरकेपतञ्जलिः।तत्रागृहीतवृत्तिकस्यशाब्द
बोधादर्शनाद्धिगुडइत्युक्तेमधुरत्वंप्रकारतयागम्यतद्वृत्तिसमर्थसूत्रभाष्याच्च तद्धर्मावच्छिन्नविषयकशाब्दत्वावच्छिन्ने
प्रतितद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानहेतुः।यद्यपिगुडइत्युक्तेऽर्थप्रतीतौतद्गतंमधुरत्वंगम्यतेतथापिन तच्छब्द
जन्यप्रतीतिविषयः किंतुमानान्तरजन्यप्रतीतिविषयः। यत्रतुगुडोमधुरइतिवाक्यार्थेगुडइत्येकदेशःप्रयुज्यतेतत्रा
पिमधुराभिन्नोगुडइत्येवबोधोनतुमधुरत्वप्रकारकोगुडविशेष्यकः। ध्वनितंचेदमत्रेनव्यञ्जनमितिसूत्रेभाष्येविशेष
णविशेष्यभावव्यत्यासेनगृहीतशक्तिकस्यपुंसोघटपदाद् घटत्वविशिष्टघटबोधवारणायतद्धर्मावच्छिन्नेति·ज्ञानेवृत्ति
वैशिष्ट्यंचस्व[illegible]विषयकोद्बुद्धसंस्कारसामानाधिकरण्य स्वाश्रयपदविषयकत्वोभयसंबंधेनबोध्यमतोनागृहीत

वृत्तिकस्य बोधो नापि विस्मृतवृत्तिकस्य नापि तत्तद्वाचकपदाज्ञानवतो नापि घटपदादाश्रयत्वेनोपस्थिताकाशस्य जन
कतयोपस्थितत्वेनादेश्च बोधः। संस्काराजनकशक्तिग्रहसत्त्वेनेन शाब्दबोधजननं च न मानं· संस्कारकल्पिका च वृत्तिस्मृ
तिरेव शाब्दबुद्धिरेवेत्यन्यदेतत्॥ सा च वृत्तिस्त्रिधा· शक्तिर्लक्षणा व्यञ्जना च· तत्र शक्तिः कः पदार्थ इति चेदस्माच्छ
ब्दादयमर्थो बोद्धव्य इत्याकारेदं पदमिममर्थं बोधयत्वित्याकारा वेश्वरेच्छा तस्याश्च यद्यपि विषयत्वलक्षणः संबन्धः पदे
ऽर्थे जन्यजनकभावे बोधे च तथापि तस्यां बोधनिष्ठजन्यतानिरूपकजनकतावत्त्वेन विषयो वाचकस्तस्यां बोधविषयत्वेन वि
षयो वाच्य इति नातिप्रसङ्गः यद्यपि प्रथमं शक्तिग्रहो वाक्य एव· तथाप्यावापोद्वापाभ्यां शास्त्रकृत्कल्पिताभ्यां तत्तत्पदे शक्ति
ग्रह इति बोध्यम्· यद्वा तादृशबोधविषयको बोध एवसेति नैयायिकास्तन्न· प्रयोज्यप्रयोजकवृद्धव्यवहारं पश्यता बाले
न प्रयोज्यस्य प्रवृत्त्या तस्य ज्ञानमनुमाय ज्ञानस्य चोपस्थितत्वाच्छब्दमेव कारणत्वेन गृहीत्वाऽसंबद्धस्य कारणत्वानुप
पत्तिज्ञानपूर्वकं कल्प्यमानस्य संबन्धस्य स्वयमनुपपद्यमानत्वेन गृहीतजनकत्वघटितस्य ग्रहीतुमशक्यत्वात्। एतेन
बोधजनकत्वमेव पदतदर्थयोः संबन्ध इत्यपास्तम्· विनिगमनाविरहेणेच्छाबोधयोरुभयोः शक्तित्वकल्पने गौरवाच्च। ८
किंचैवमिदमस्माद्भवत्वितीच्छाविषयत्वमेव जनकत्वं स्यादिति बहूपप्लवः॥ किंच प्रमाणानां जनकत्वतद्घटितसंबन्धा

3

तिरिक्तसंबन्धेनैव प्रमेयसंबन्धानां ज्ञानजनकत्वदर्शनेनेहसयोः संबन्धत्वानौचित्यम्‌ अन्यथा धूमादेर्वह्नेर्ज्ञानजनकतामिती-
च्छाविषयत्वमेव तद्बोधजनकत्वमेव वा हेतुसाध्ययोः संबन्धः स्यादिति व्याप्त्युच्छेदः॥ किञ्चेच्छाया जनकत्वस्यैवोभयवृत्ति-
त्वाभावः इच्छाविषयबोधीयविषयतायां इच्छाश्रयतानियामकत्वाभावात्‌ संबन्धो हि संबन्धिभ्यां भिन्नत्वे उभयाश्रित इति
द्विष्ठः संबन्ध इति च विशिष्टबुद्धिनियामक इति चाभियुक्तव्यवहारात्‌· न हि तत्र विषय इच्छावानित्यादिव्यवहारोऽस्ति।
बोधजनकतायाः पदेऽर्थे च सत्त्वेऽपि तयोः परस्परं संबन्धस्य दुरुपपादत्वात्‌· ज्ञाने विषयस्य कर्तुश्च कारणत्वेऽपि तयोः प-
रस्परं विशिष्टबुद्ध्यदर्शनात्‌· अर्थपदयोः संबन्धस्य दुरुपपादत्वात्‌· तस्मात्पदपदार्थयोः संबन्धान्तरमेव शक्तिः बोध्यबो-
धकभावापरपर्याया· तद्ग्राहकं चेतरेतराध्यासमूलं तादात्म्यम्‌· तच्च संकेतः। तस्यापि पदनिष्ठशक्त्युपकारकत्वाच्छक्ति-
रिति व्यवहारः तस्य संबन्धत्वाभावात्‌ तत्‌ भेदाभेदरूपस्य तस्य तत्त्वासंभवात्‌· तद्घटकस्य भेदस्याभेदस्य वा तत्त्वादर्श-
नात्‌ अभेदस्यापि तत्त्वं खण्डयिष्यते· तदुक्तं पातञ्जले भाष्ये· संकेतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मको
योऽयं शब्दः सोऽर्थो योऽर्थः स शब्द इति· स्मृत्यात्मक इत्यनेन ज्ञातस्यैव संकेतस्य शक्तिबोधकत्वं दर्शितम्‌ किञ्च पाणिन्यादि-
स्मार्तसंकेतस्यैव वाचकतानियामकत्वं न त्वाधुनिकस्येत्याद्यपि दर्शितम्‌· एवं चाधुनिकसंकेतस्थले ह्यादशेन्हिक्ति

ल·म·

३

यमाणनामस्थलेत्वलक्षणा। तत्र घटगोविन्दादिगुणारोपेण तन्मूलकतत्पवृत्तिनिमित्तारोपेण च बोधः। संबन्धश्च
स्वशक्तसंकेतविषयत्वम्· एतदर्थमेव संकेतोपयोगः। अत एव तस्य भाव इति सूत्रे भाष्ये· डित्थादिषु प्रकृत्यर्थ
व्यतिरिक्तप्रत्ययार्थाभावाद् भावप्रत्ययानुत्पत्तिर्न प्राप्नोति डित्थत्वमित्याशङ्क्य प्राथमकल्पिकडित्थेन कृतां क्रियां
गुणान्वा यः कश्चित् करोति स उच्यते डित्थत्वं तत एवेदं डित्थाः कुर्वन्ति प्राथमकल्पिके तर्हि कथं यथा तस्य कार्थं चित्कः
प्रयोगस्तथा वृत्तिरपीत्युक्तम्· तत्र शब्दरूपस्यार्थे आरोपात् प्रकारमाश्रित्य यथा शब्दस्यार्थे प्रयोगस्तथा वृत्तिरपीत्य
र्थ इति कैयटः। तत्पक्षे कथंचित्सदृश्यन तथा स्वारस्यमन्यत्रारोपस्यानुपयोगश्चेत्यन्वे व्याचक्षते॥ व्यक्तावेव च श
क्तिस्तस्या एव च विषयता द्वयेन भानमिति शक्तिग्रहप्रयोगयोरुपपत्तिस्तथा लक्षणापस्या पीति एवंरीतेरन्यत्रकाप्य

राम·

दर्शनेनात्र पक्षे कथंचिद्युक्तिरत्यन्तं समञ्जसेति बोध्यम्· अनादित्वात्संसारस्य ततोपि पूर्वतनडित्थादिगुणानाश्रित्य प्रयो
गादीति कश्चित्· तत्र तत्तत्संकेतज्ञानादेव बोधः। शक्त्याद्यभावे पीति तु न युक्तम्· संवृत्त्यन्तरत्वापत्तेः वृत्तिजन्योपस्थितिं वि
ना शाब्दबोधविषयत्वासंभवाच्च· द्वादशेऽह्नि पिता नाम कुर्यादित्युक्त्या स्मृत्या वा नामत्वेन नामबोधेपि तत्तद्रूपेणे
श्वरेण संकेताकरणे न तत्रापि शक्तेर्दुरुपपादत्वात्· अत्र नामपदेन ज्ञानकरणीभूतो बोधकः शब्द उच्यते॥ येन्तु

२

पदपदार्थयोर्बोधकबोध्यत्वनियामिकाशक्तिरेवसंबन्धइतितन्न· शक्तेरपिकार्यजनकत्वेसंबन्धस्यैवनियामकत्वात्· दी
पगतप्रकाशकत्वशक्तावपिसंबन्धेसत्येववस्तुप्रकाशकत्वंनान्यथेतिदृष्टत्वात्· तदुक्तंहरिणाः उपकारः सयत्रास्तिधर्म
स्तत्रानुगम्यते· शक्तीनामप्यसौशक्तिर्गुणानामप्यसौगुणइति· उपकारः उपकार्योपकारकयोरुपकारस्वभावः संबन्धोय
त्रास्तितत्रधर्मः शक्तिरूपः कार्यदृष्ट्यानुमीयते· असौसंबन्धः शक्तीनामपिकार्यजननेउपकारकः गुणानामपिद्रव्याश्रितत्व
नियामकः संबन्धइतितदर्थइतिहेलाराजः। ससंबन्धः पदेवाक्येच। तत्राद्यन्यायभाष्यकारः· समयज्ञानार्थंचेदंपदलक्षणा
यावाचोन्वाख्यानंव्याकरणंवाक्यलक्षणायावाचोर्थलक्षणमिति· अनेनहि· पदेष्विववाक्येष्वपिऐश्वरः समयइतिस्पष्टमेवो
क्तं·वाक्यविषयेसमयग्राहकमाकाङ्क्षाद्यपि· समयज्ञानार्थमित्यस्यसाधूनामित्यादिः।एतेनपदार्थसंबन्धग्रहवन्त्यपि
पदानिवाक्यार्थेसमयग्रहानपेक्षाण्येवेतिवाक्यस्फोटोनैयायिकासंमतइतिपरास्तम्। एतच्चोपरिष्टाद्वक्ष्यामः। पदस्यैवार्थ·
बोधकमवयवद्वाराव्याकरणमितिचसूचितम्। कःशब्दः कोर्थइतिप्रश्नेघटइत्ययंशब्दोघटइत्ययमर्थइत्येकाकारोत्तरदर्शना·
त्तयोरध्याससिद्धिः। घटइत्याकारकंज्ञानमितिव्यवहाराच्छब्दज्ञानयोरपिसः। इतिशब्दस्यशब्दस्वरूपपरतातात्पर्यग्राहकत्वा
त्· अतएवपद्यंश्रुतमथार्थंशृणु अर्थंवदतीत्यादिव्यवहारः। शब्दार्थयोरितरेतराध्यासादेवबुद्धिशादैचू ओमित्येकाक्षरं·

सू·मं·
४

ब्रह्मेति शक्तिग्राहकश्रुतिस्मृत्योः सामानाधिकरण्येन प्रयोगः। तादात्म्यं च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्· अभेद
स्याध्यस्तत्वाच्च न तयोर्विरोधः तत्र भेदस्योद्भूतत्वविवक्षया अस्यार्थस्यायं वाचकः उक्तः प्रगृह्यं तस्य वाचकः प्रणवः इत्यादौ
षष्ठी। अभेदस्य तत्त्वविवक्षया तु प्रथमा यथोक्तेषु· अत एवार्थे शब्दधर्मत्वव्यवहारः अत्यन्तभेदे च पुरुषयोरिव तद्व्यव
हाराभावात्· नाप्यत्यन्ताभेदे सः घटे स्वधर्मत्वव्यवहाराभावात्। अयमध्यासश्चानादिर्व्यवहारकृदीश्वरकृत एव। एतच्चास्थि
तोऽस्य वाचकस्य वाच्येन सह संबन्धः संकेतस्तूनरूप ईश्वरस्य स्थितमेवार्थमभिनयति· यथावस्थितः पितापुत्रयोः सं
बन्धः संकेतेनावद्योत्यते· अयमस्य पिता· अयमस्य पुत्र इतीत्यादिना पातञ्जलभाष्ये एवमस्पष्टम्। हरिरप्याह· इन्द्रियाणां स्व
विषयेष्वनादिर्योग्यता यथा· अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा· संबन्धशब्दे संबन्धो योग्यतां प्रति योग्यता· समया
द्योग्यता संविज्ञाता पुत्राद्वियोगवत्· सति प्रत्ययहेतुत्वं संबन्धे उपपद्यते· शब्दस्यार्थे यतस्तस्मात्संबन्धोऽस्तीति गम्यत इति
अस्यार्थः यथा चक्षुरादीनां रूपादिविषयज्ञानजननेऽनादिः पुरुषयत्नानपेक्षा योग्यता तज्जनकतावच्छेदकधर्मवत्त्वरूपा
तथा शब्दानामर्थैरनादिः संबन्ध एव योग्यता। तद्बोधजनकतावच्छेदको धर्मः संबन्धशब्दे योग्यतां प्रति बोधजनकतावच्छेद
कधर्मरूपयोग्यतानिरूपितो यस्तादात्म्यलक्षणः संबन्धः स एव योग्यता· सा च स्वाभाविकी येनानादिवृद्धव्यवहारपरंपराप

ए·म·
४

तेसाधुष्वनुमानेनप्रत्ययोत्पत्तिरिति तवःबंब म्बेतियत्ता बालः शिक्ष्यमाणः प्रभाषते॥ अव्यक्तं तद्दृष्टांतेन व्यक्ते भवति निश्चय
इतिहर्य्युक्तेः। अनुमानमत्र ज्ञानम् साधुविषयकस्मरणेनेत्यर्थः। तद्दृष्टांसाधुविदाम्। असाधोः साधुप्रकृतिकत्वात्साहश्ये
नतज्ज्ञानमिति वाच्यम्। साधुस्मरणंविनापिबोधानुभवात् तद्वाचकसाधुशब्दमजानतांबोधानापत्तेश्च॥ तदर्थज्ञाप
कत्वेनस्मरणन्तु नार्थोपस्थापकम्। शक्तताच्छेदकानुपूर्व्यग्रहात् तद्वाचकसर्वनामस्मरणाननुभवाच्च उच्चारित
स्यैवबोधकत्वेन स्मृतसाधुतो बोधासंभवाच्च नचशक्तिभ्रमाद्बोधः पूर्वपूर्वभ्रमाच्चोत्तरोत्तरभ्रम इति पामराणां शक्त्यग्रहे
पितद्भ्रमोपपत्तिरिति वाच्यम् घटत्वविशिष्टघटादिरूपार्थनिरूपितायाघटादिपदवृत्तित्वेन गृहीतायाभिन्नानुपूर्वीकत्व
रूपविशेषदर्शनसत्त्वेन साधारणधर्मदर्शनाभावेनचगगरीपदादौभ्रमानुपपत्तेः। यदितु अशक्त्याकेनचित् गगरीतिप्रयु
क्तेबंबेत्यादाविवघटइति साधुशब्दस्मरणात्सयोज्यस्य बोधेनतटस्थस्यगगरीशब्दादेवास्यबोधइतिभ्रमेणाद्यस्यश
क्तिभ्रमस्तन्मूलश्चान्येषामपि तदुक्तं हरिणा तादात्म्यमुपगम्येव शब्दार्थस्यप्रकाशका इति इवशब्देनतदुपगमस्यभ्र
मत्वंसूचितम्। तादात्म्यस्यशक्तित्वं चस्पष्टमेवोक्तम्। जैमिनिनाचतदशक्तिश्चानुरूपत्वादिति तद्भाष्यकृताचतन्नोक्तरीत्या
शक्तिभ्रमउपपादित इत्युच्यते तदाप्रत्येकं तत्तत्संस्कृतस्यतत्तदपभ्रंशेनविनिगमनाविरहात्तेषु शक्तिः नचसकलदेश

ल·मं ७

शिष्टपरिगृहीतत्वं विनिगमकम्। शवतिर्गतिकर्मा कम्बोजेषु विकार एवैनमार्या भाषन्ते इत्यादिभाष्यरीत्या तत्तद्देशनियत संस्कृतेषु शक्तिसिद्ध्यनापत्तेः॥ वाचकस्य व्यञ्जकत्व आलंकारिकाणां आकृतभावोदाहरणस्यासंगत्या ¯पत्तेश्च· तत्तद्देशीयशिष्टानां तत्तद्भाषास्वजायमानस्य निर्विचिकित्सशक्तत्वप्रत्ययस्य बाधकं विना भ्रमत्वायोगाच्च· अत एव स्त्रीशूद्रबालानां प्रयुक्ते साधौ अर्थसंशये तदपभ्रंशेन निर्णयः। आर्यम्लेच्छाधिकरणस्य तु इदं तात्पर्यम्· तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते तमेव च बुध्यन्ते म्लेच्छास्तु प्रियंगौ प्रयुञ्जते। तमेव च बुध्यन्ते म्लेच्छपदेनानार्याः तथापि आर्यप्रसिद्धेर्बलव॰ त्वाद्दीर्घशूकपरत्वं वेति सिद्धान्तितम्· तत्र हि शवतिर्गतिकर्मेत्याद्युक्तभाष्याद् द्वयोरपि शक्तिग्रहाद्बोधेनोभयत्रापि साधुत्वेन शक्तत्वेन च तृतीयस्य संदेहे विकल्पबोधे वा आर्यप्रसिद्धेर्बलवत्त्वाद्देतद्बोध एवोचित इति· एवञ्चानार्यैरपि यद्येयवा एवोपादेयाः। पूर्वपक्षे तु अनार्यैः प्रियंगव एवोपादेया इति विशेषः॥ तदुक्तं हरिणा· शब्दतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिता इति· आर्याणां शिष्टत्वात्तत्प्रसिद्धेर्बलवत्त्वमिति बोध्यम्· ननु अनार्यप्रसिद्धेः अर्थेऽ शक्तत्वेऽ साधुत्वे वा तात्पर्यम्· जैमिनिरप्याह· तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यादिति यवशब्दे उभयथा शब्दार्थावगमाद्विकल्पः स्यादित्यर्थः एवं पूर्वपक्षे सिद्धान्तसूत्रं शास्त्रस्था वा तन्निमित्तत्वादिति । शास्त्रस्थानां शिष्टानां सशब्दार्थो वेद इति शेषः तेषामविच्छि



स·म· ७

स्यार्थे बहवो गावी गोता गोणी गोपोतलिकेत्यादयोऽपभ्रंशा वर्तन्ते इत्यर्थकं गौरित्यस्य शब्दस्य गाव्यादयोऽपभ्रंशा इति
भाष्यं सामञ्जस्येन सङ्गच्छते - अतएव भाष्ये धर्मार्थत्वं साधूनामुक्तम्। एतेनार्थाय ह्येते उच्यन्ते शब्दा न धर्माय इति शब
रस्याप्युक्तमपास्तम्। जैमिनिसूत्रस्याप्ययमर्थः अपभ्रंशा अपि साधवः तेऽपि हि साधयन्त्यर्थमिति पूर्वपक्षः न्यायोऽनेकसा
धुशब्दत्वमिति केचिदेते साधवो न सर्वे इति मनसि निधाय तर्हि साधौ प्रयोक्तव्ये साधूच्चारणं कथमित्याशङ्क्य शब्दे प्र
यत्ननिष्पत्तेः अपराधस्य भागित्वमिति सूत्रेण प्रयत्नसाध्ये कार्ये प्रमादस्य दर्शनात्। यथा शुष्के पतिष्यामीति कर्दमे पत
ति तथा साधौ प्रयोक्तव्येऽसाधोः प्रयोग इत्युक्तम्। किञ्चैकस्यार्थस्यानेकसाधुशब्दत्वमन्याय्यम्। तस्मादेकोनादिरन्येऽपभ्रं
शाः हस्तः करः पाणिरित्यादयोऽभियुक्तोपदेशात्सर्वे साधव इत्युक्त्वा तत्राभियुक्तोपदिष्टः साधुरित्युक्ते तन्नेदमाशङ्क्योत
गौरिति प्रयोक्तव्ये गाव्यादीनामिव गगर्यादीनामपि प्रमादात्प्रयोगः कुतो नेति - तन्नेदं सूत्रम् - तदशक्तिश्चानुरूपत्वा दि
ति तेषामेवाशक्त्योच्चारणमनुरूपत्वादर्थतोऽवयवतश्चानुरूपत्वादिति तदर्थः तत्रार्थतश्चानुरूप्याग्रहणे गोपादिश
ब्दानामपि उच्चारणं प्रसज्येत - एकदेशानुरूप्याच्च विभक्तिव्यत्ययेऽपि अश्मकेरागच्छामीति प्रयोगादश्मकेभ्य इत्यर्थाव
गतिर्भवति - तत्र यद्यपि तदर्थे लौकिकः प्रयोगस्तदा न साधुर्वेदे तु साधुरित्यन्यत् - एवञ्च पतञ्जलिनैकवाक्यता भवति

ल॰ मं॰
९

नन्वपभ्रंशानां शक्तत्वेऽर्थवत्त्वादर्थवत्सूत्रेण प्रातिपदिकसंज्ञापत्तिरिति चेदिष्टापत्तिः अत एव पस्पशायां एवं हि श्रूयते य
र्वाणस्तर्वाणो नाम ऋषयो बभूवुस्ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते याज्ञे कर्म
णि पुनर्नापभाषन्ते इति भाष्ये उक्तम्· तत्र यर्वाणस्तर्वाण इति णान्तोऽज्झसि यर्वाणस्तर्वाणो नामेति प्रयुक्तम् अत एव रुत्वो
त्वादि बभूवुरित्यनेन सामानाधिकरण्यं न्वा प्रकृतिप्रत्यययोरुभयोरपि शास्त्रविषयत्वे एव साधुत्वेन त्वन्यतरस्य गगरी
त्यादि च घट इति पदस्यैवापभ्रंश इति न ततः सुः गगरीमित्यादि प्रयुञ्जते चेति केचित् परे तु साध्वनुशासनेऽस्मिन् शास्त्रे इ
ति भाष्योक्तेरर्थवत्त्वेन साधूनामेव संज्ञाविधानं हि प्रयत्नमिति नासाधुषु प्रातिपदिकसंज्ञा· यर्वाणस्तर्वाण इत्यादौ सुबप्य
साधुरेव· अत एव परश्चेति सूत्रे भाष्ये किमस्य ह्रयसामित्य साधुः वृत्तिजसादृश्येऽप्य वृत्तिजत्वादित्युक्तम् प्रकृत्युद्देशेने
व प्रत्ययानां विधानात्केवलानामसाधुत्वं बोध्यते· तत्र वृत्तिजसदृशत्वात्कश्चित्साधुरिति भ्रमो हि तिप्रत्ययः पर एवे
ति नियमेनाप्यसाधुत्वमुक्तं भाष्ये। अर्थतः शब्दलक्षणः प्रत्ययजातीयः स पर एवेत्यर्थे नासाधुत्वं बोध्यते· एवं च शास्त्र
विहितत्वाभावादस्मोऽप्यसाधुत्वमित्युक्तप्रायम्· अस्मैःस्वशब्दस्यासाधुत्वमुक्तमन्यत्र· अत एव प्रकृतिपर एव प्रत्य
यः प्रत्ययपरैव प्रकृतिरिति नियमाकारो दर्शितो भाष्ये· साधूनामेव प्रत्ययविधावुद्देश्यत्वेन प्रकृतित्वम्। खण्डसा-

राम॰
९

तत्र प्रातिपदिकत्वमित्यन्यत्र विस्तरः। शक्तिस्त्रिधा। रूढिर्योगो योगरूढिश्च। शास्त्रकृत्कल्पितावयवार्थाप्रतीतौ यदर्थ
निरूपितं प्रकृतिप्रत्ययसमुदायमात्रे बोधकत्वं तत्पदे सा तदर्थनिरूपिता रूढिः। यथा मणिनूपुरादौ। शास्त्रकल्पिताव
यवार्थमात्रबोधे योगशक्तिः यथा पाचकादौ। अश्वगन्धादिपदमौषधिविशेषबोधे रूढम्। अश्वसंबन्धवत्तया वाजिशाला
बोधे यौगिकमिदं यौगिकरूढमित्युच्यते। रूढिर्योगापहारिणी तिलुप्रकरणाद्यभावे बोध्यम्। यत्र मण्डपपदादिभ्यो मण्डपा
नकर्त्रादेरूढ्यर्थमण्डपादिगुणवत्त्वेन बोधस्तत्र प्रथमप्रतीतरूढिविषयमुख्यार्थत्यागेन योगाद्रूढिपूर्वकलक्षणाया
बलवत्त्वेन लक्षणयैव बोधः। यत्र शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपितं समुदाये बोधकत्वं सा योगरूढिः। य
था पङ्कजादिपदे तत्र पङ्कजनिकर्तृपद्ममिति बोधात् पद्मस्यानुपपत्तिप्रतिसन्धानं संबन्धप्रतिसन्धानं च विना बोधान्न तत्र
लक्षणावसरः। क्वचित्तात्पर्यग्राहकवशात् केवलरूढ्यर्थस्य केवलयोगार्थस्य च बोधः भूमौ पङ्कजमुत्पन्नं कह्लारके स्वसु
रेष्वपि पङ्कजेषु इत्यादौ स्पष्टं चेदमाहार्हादिति सूत्रे भाष्ये सैषा शक्तिः संयोगादिभिर्नानार्थशब्देषु नियम्यते। तदुक्तं हरिणा। सं
योगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिती देशः कालो व्यक्तिः
स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इति। एते संयोगादयः शब्दार्थस्यानवच्छेदे सन्देहे तदपाकरणद्वारे

ल· सं·
१२

णविशेषस्मृतिहेतवो निर्णयहेतव इत्यर्थः। उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थवि
षयकान्वयबोधजनका इति भावः। संख्यासंज्ञासूत्रे भाष्येऽपि स्फुटमेतत्। अत्र सामर्थ्यमेवैकं मुख्यं निर्णायकं संयो
गादयस्तद्व्यञ्जकमपन्न्वैति: सामर्थ्यस्यैवाभिव्यक्तेरिति परे· सवत्सा धेनुरवत्सा धेनुरिति संसर्गविप्रयोगयोरुदाहरणे
रामलक्ष्मणावित्यादौ साहचर्येणोभयोर्युगपदेव नियमनमिति नान्योन्याश्रयः साहचर्यं च सादृश्यं सदृशयोरेव सह
प्रयोगनियमात्· रामार्जुनगतिस्तयोरित्यत्र विरोधेन तद्। अञ्जलिना जुहोति· अञ्जलिना सूर्यमुपतिष्ठत इत्यत्र जुहोत्या
दिपदार्थवशादञ्जलिपदस्य तत्तदाकाराञ्जलिपरत्वं· सैंधवमानयेत्यादौ प्रकरणेन तत्· अक्ताः शर्करा उपदधातीत्या
दौ तेजो वै घृतमिति वैघृतस्तुतिरूपाल्लिङ्गादक्ता इत्यस्य घृतसाधनाञ्जनपरत्वम्। रामो जामदग्न्यं पदसन्निधानेन रामः पर
शुरामः। अभिरूपाय कन्या देयेत्यादौ अभिरूपतरायेति सामर्थ्यात्प्रतीयते· यस्त्वानिस्त्वं परशुना इत्यादौ औचित्यात्परशुने
त्यस्य च्छेदनार्थत्वं भात्यत्र परमेश्वर इत्यत्र राजधानीरूपाद्देशात्परमेश्वरपदं राजबोधकं चित्रभानुर्भातीत्यादौ रात्रौ व
ह्नौ दिवा सूर्ये व्यक्तिर्लिङ्गं मित्रो भाति मित्रं भाति· अत्राद्येन सूर्योऽन्ते सुहृत्· स्थूलपृषतीमित्यादौ स्वरात्तत्पुरुषबहुव्रीह्यर्थ
निर्णयः। आदिना वत्वसत्वणत्वनत्वादि· सुसिक्तमित्यादौ पूजार्थः सुः कर्मप्रवचनीयः सुषिक्तमित्यत्रोपसर्गोऽन्यार्थः। प्रणा

राम·
१२

निरूढलक्षणा· असतिप्रयोजने शक्यार्थबाधप्रतिसन्धानपूर्वकं तत्संबन्ध्यपरार्थबोधे निरूढलक्षणेति व्यवहारोऽन्यथा
रूढिशक्तिरेवेति बोध्यम्· प्रयोजनवती तु कुन्ताः प्रविशन्तीत्यत्र भीतिपलायनानन्वाक्ये कुन्तानां तात्पर्यविषयकुन्ति प्रवे
शान्वयबाधात्कुन्तपदस्य तत्संयुक्तपुरुषे लक्षणा कुन्तगततैक्ष्ण्यप्रतीतिः प्रयोजनम्। गङ्गायां घोष इत्यत्र प्रवाहे घोषा
धिकरणत्वबाधाद् गङ्गापदेन स्वसंबन्धितीरं लक्ष्यते। गङ्गागतशैत्यपावनत्वप्रतीतिः प्रयोजनम्। गोर्वाहीक इत्यत्र गोसा
दृश्यं लक्ष्यतावच्छेदकं गवाभेदप्रत्ययः फलम्। व्यञ्जनाजन्यबोधे बाधज्ञानस्याप्रतिबन्धकत्वात्। एष चाहार्यः शाब्दज
न्यभेदकधर्मोपस्थितिकालिकत्वाद् लक्ष्ये गङ्गायां घोष इत्यादौ च गङ्गागतशैत्यादिप्रतीतये मध्ये तीरादौ गङ्गाभेदप्र
तीतिः उपकृतं बहु नामेत्यादौ लक्ष्येऽपकारे उपकाराभेदप्रतीतिद्वारैव साधुत्वं व्यङ्ग्यम्। केचित्तु गोर्वाहीक इत्यादौ साधारण
धर्माप्रयोजडादिर्जडत्वेन लक्ष्यस्तत्र गवाभेदप्रतीतिद्वारा गोवृत्त्यसाधारणजडत्वप्रतीतिः फलम्· न च गोर्वाहीकोऽज
ड इत्यादौ पौनरुक्त्यम्· लक्ष्यतावच्छेदकान्तरव्युदासे तस्य तात्पर्यात्· सदृशत्वेन लक्षणेतिवादिनापि सादृश्यस्य विशि
ष्टसाधारणधर्मप्रतीतिं विना पर्यवसानाभावेन प्रसिद्ध्यादिना तत्पर्यवसानं वाच्यमित्यन्यथानुपपत्त्या प्रसक्ततायाः लक्षणा
याः साधारणधर्मविशिष्ट एवौचित्यात्· एतेन गौर्वाहीक इत्यादौ गोशब्देन स्वशक्यगतजाड्यादिगुणसदृशजाड्याद

यएवलक्ष्यन्ते तैश्चजातिशक्तिनयेव्यक्तिलाभवत् स्वाश्रयव्यक्तिलाभइतिपरास्तमित्याहुः।आमोदग्धः पुष्पिते वनमित्या
दौदग्धादिपदानिअर्शआद्यजन्तानीत्यर्थवत्त्वस्वभाष्योक्तेस्तत्रलक्षणैवनेतिबोध्यम्· ईदृशेषुजहदजहल्लक्षणेत्यन्ये·के
चित्तुज्ञाप्यसंबन्धेनोद्बुद्धशक्तिसंस्कारतोबोधेलक्षणा।गम्भीरायांनद्यांघोषइत्याद्युरोधात्· तथाहिनतावद्गम्भी
रपदंतीरलक्षकंनद्यामित्यनन्वयापत्तेः नहितीरंनदी·अतएवनदीपदेऽपिगम्भीरेपदार्थान्वयात्· नहितीरंगम्भी
रम्· नचपदद्वयेप्रत्येकंसाविशिष्टनदीतीरार्थेतिप्रसङ्गात्· नचनदीपदेनगम्भीरनदीतीरंलक्ष्यतेगम्भीरपदन्तात्पर्यग्रा
हकमितिवाच्यम्विनिगमनाविरहात्· नचनदीपदस्यद्रव्यवाचकतयासाक्षात्संबन्धानुरोधेनतत्रैवसेतिवाच्यम्·गम्भी
रपदस्यापिनित्यगुणिवाचकतयातेनापिसाक्षात्संबन्धस्यैवसत्त्वात्·अतःसमुदायेसाङ्गीकार्या अतएवार्थवादवाक्या
नांप्राशस्त्येलक्षणासिद्धिः।अपभ्रंशेष्वपिलक्षणैवेव·अतएवलक्ष्यस्यव्यञ्जकतायांसाहेत्तीलाघवदाहरणंप्रकाश
कारैर्दत्तम् तस्यापिशक्तत्वाच्च ज्ञापकत्वंचार्थबोधकता पर्याप्त्यधिकरणत्वमितिनप्रत्येकंवर्णेषुसा·लक्ष्यतावच्छे
दकत्वंबल्लक्षकतावच्छेदकत्वस्यापिगुरुभूतायांपरघटितानुपूर्व्यांस्वीकारेबाधकाभावः ज्ञापकताशरीरेज्ञानंचशा
ब्दबोधस्वरूपमेवनिविष्टमितिनशब्दसमवायेनघटादिपदज्ञाप्याकाशस्यशक्तिविनाप्युपस्थितस्यशाब्दविषयत्वम्।अन

एवञ्छत्रिणो यान्तीत्यादौ छत्रिपदस्यैकसार्थवाहित्वेन छत्र्यच्छत्रिसमुदायैकलक्षणेति समासादिवृत्तौ विशिष्टशक्ति
मनङ्गीकुर्वन्तोऽपि वृद्धा आहुः। परन्तु आरोपितशक्यतावच्छेदकरूपेण शक्यतावत्तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोधे
व्यक्तिविशेषबोधे वा लक्षणेति व्यवहारः छत्रिणो यान्तीत्यादाव च्छत्रिष्ठु साहचर्याच्छत्रित्वारोपः काकेभ्यो दधीत्या
दावपि दध्युपघातकमात्रे काकत्वारोपः कमलानि कमलानीत्यादौ कमलत्वेनैव व्यक्तिविशेषबोधः त्वामस्मि वच्मी
त्यादौ सम्बोध्यत्वादिनैवोपदेश्यत्वाद्यवस्थाविशिष्टे तत्तद्व्यक्तिविशेषबोधो लक्षणया। अत्र पौनरुक्त्याद्विशेषानाधा
यकत्वाद्वा तात्पर्यानुपपत्तिः सामान्यविशेषभावः संबन्धः अत एव प्रयोगाद्दारव्यायामिति सूत्रे भाष्ये गोपीत्यादौ गोप
संबन्धि स्त्रीत्वेन लक्षणायां तस्येदमिति शास्त्रेण ताहृशोऽर्थः प्रत्ययान्तस्यैव ताहृशवाक्यस्यैव वा साधुत्वनियमाद
साधुत्वापत्तिं दूषणमभिसंधायनावश्यमयमेवाभिसंबन्धो भवति तस्येदमिति किंतु तन्मूलकः सोऽयमित्ययमभिसंबन्धोऽ
स्तीति तूक्ता चतुर्भिः प्रकारैरेतस्मिन्सद्भूत्ये तद्भवति तात्स्थ्यात्ताद्धर्म्यात्तत्सामीप्यात्तत्साहचर्यादिति मञ्चाहसन्ति सिंहो मा
णवको गङ्गायां घोषो यष्टीः प्रवेशयेत्युक्तम्। सोऽयमित्यपीत्यादेः सोऽयमित्यपि विशेषणविशेष्यभावोऽस्तीत्यर्थः नद्यां गङ्गायां घो
ष इत्यादावारोपितगङ्गात्वेन बाधेऽपि तस्य ज्ञानस्य भ्रमत्वाच्छास्त्रज्ञानवतां सर्वथा भ्रमत्वेन ग्रहाच्च तद्दुत्तरं गङ्गाग

तच्छैत्यपावनत्वादिप्रतीतिरूपं फलं न सिद्ध्येत्. अतएव शुक्तौ रजतज्ञाने भ्रमत्वज्ञानवतो न प्रवृत्तिरिति वाच्यम्. मध्ये
व्यञ्जनया मुख्यगङ्गापदार्थाभेदस्यापि प्रतीतेः व्यञ्जनाजन्यज्ञाने च बाधज्ञानेन नाप्रामाण्यग्रह इत्यदोषात्. वस्तुतस्तु
स्तत्र व्याद्युपपत्तिमूलकारोपितार्थबोधे बाधज्ञानेन नाप्रामाण्यग्रहो जन्यते. अतएव पचतीत्यादिजबोधेनाप्रा
माण्यग्रहः तथा सत्यनुपपत्तिपरिहाराभावादित्यग्रे निरूपयिष्यामः. कुन्ताः प्रविशन्तीत्यादौ कुन्तसंयोगविशिष्टपु
रुषाणां कुन्तत्वेन प्रतीतिरिति अजहत्स्वार्थत्वोपपत्तिः. कैयटो व्याहारोप्यतेनादूष्यं न तु मुख्यं. बालेषु मञ्चत्वारोपा
न्मञ्चपदप्रवृत्तिरिह सन्तीति पदान्तरप्रयोगादिह ज्ञापते इति शक्यादन्येन रूपेण ज्ञाने भवति लक्षणेति तु कस्यचित्समा
लोक्तिः यद्वा शक्यतावच्छेदकान्यरूपवत्त्वेन गृहीतेऽर्थे लक्षणा शक्यतावच्छेदकारोप इति तदर्थः. यथा तीरत्वविशि
ष्टस्य गङ्गात्वेन बोध इति. अतएव गङ्गायां मीनघोषौ स्त इत्याद्युपपद्यते अन्यथा हि द्व्यर्थस्यैकधर्मावच्छिन्नेनान्वयस्य
तादृशस्य द्वन्द्वार्थेनान्वयस्यैव राजा ग्रामं नयति. अजाविधनौ देवदत्तयज्ञदत्तावित्यादौ यथासंख्यान्वये द्वन्द्ववारणाय पयः
पयो नयतीत्यादावेकशेषवारणाय चावश्यकत्वेन प्रतीत्यान्वमीनस्य तीरत्वावच्छिन्नेनान्वयेन घोषस्य तीरत्वावच्छि
न्नेनान्वयेन द्वन्द्वः साधुः स्यात्. मम तु गङ्गात्वेनैव तीरबोधादेकधर्मावच्छिन्नेनान्वयसत्त्वे न नक्षतिः. शुभपदवृत्तिद्वयविरोधो

मं·
१६

त्यादावपि साधारणधर्मजडत्वादिरूपेण निमित्तेन वाहीकस्यारोपितगोत्वेन बोधस्ततो व्यञ्जनया मुख्यगवाभेदप्र
तीतिः प्रयोजनं। तत एव च चमत्कारः। आद्यबोधेन तु न चमत्कारः। तस्मिन् भ्रमत्वज्ञानात्। अत एव गौर्वाहीक इ
त्यादौ न पौनरुक्त्यं लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता इत्यस्य यद्गुणज्ञानपूर्वकं वाहीके गोशब्दप्रयोगस्तैरु
पमानगुणैर्योगात्तद्गुणस्वरूपात्तां बन्ध्यादित्यर्थः। प्रकृत्यादित्वात्तृतीया। यद्वा प्रथमत एव तन्नामार्थयोरभेदबोधे
बाधज्ञानस्यानुपपत्तिर्जलत्वस्याजन्यशाब्दबोधे प्रामाण्यग्रहजनकत्वस्याभावात्। भावप्रधानो निर्देशः शक्यत्व-
स्याप्ययमेवार्थः। घटादिपदप्रवृत्तिनिमित्तस्य घटत्वादेस्तत्रैवाभेदसंबन्धेनाहार्यारोपात्। घटत्वादिप्रकारकघट
त्वादिबोधो घटादिशब्दाल्लक्षणयेति। अन्नं प्राणाश्चन्दनं तुलेत्यादावाहार्यारोपस्यैव लक्षणात्वादिति बोध्यम्।
व्रीहीन्प्रोक्षतीत्यादावपूर्वसाधनीभूतव्यक्तीनामेव तात्पर्यवशाद्व्रीहिपदेन व्रीहित्वेन भानम्। एवं प्रतिनि
धिष्वपि व्रीहित्वमारोप्य व्रीहित्वेनैव तात्पर्यवशादपूर्वसाधनीभूततत्प्रतिनिधिव्यक्तीनां भानं न त्वपूर्वसाधन
त्वेन भानम्। अत्र सर्वत्र तत्तद्धर्मविशिष्टे शक्यतावच्छेदकधर्मारोपः। अत एव कचं न रस्त्रस्यति वहनमित्या
दौ कचत्वादिना राहुत्वादिविशिष्टस्य बोधान्न त्रासाद्यन्वयानुपपत्तिः। हरिरप्याह। एकमाहुरनेकार्थशब्दमन्ये

10

राम
१६

ध्वनएव न दोषाय दूषकताबीजाभावाच्चान्वयानुपपत्त्याच युगपदेव गङ्गात्वेनैव नीरतीरयोरुपस्थितिः काकेभ्यो द
धीत्यादावप्येवमेव। गौतमोप्याह। सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मण
बालकटराजसक्तुचन्दनगङ्गाशकटान्नपुरुषेष्वतद्भावेपि तदुपचार इति तस्य भावः। तद्धर्मस्तदभावेपि तदुपचारः त
च्छब्दव्यवहार इत्यर्थः सच तद्धर्मारोपेण आरोपनिमित्तानि च सहचरणादीनि यष्टीः प्रवेशय मञ्चाः क्रोशन्ति वीरणेष्वा
स्ते ऽयं राजा यमः प्रस्थः सक्तुः चन्दनं तुला गङ्गायां घोषः कृष्णः शकटः अन्नं प्राणाः अयं कुलस्य राजेत्युदाहरणानि क्र
मेण यष्टित्वारोपो ब्राह्मणे साहचर्यात्। मञ्चत्वारोपो बालेषु तात्स्थ्यात् कटेषु वीरणत्वारोपस्तादर्थ्यात्। राज्ञि यम
त्वारोपो वृत्तात् सक्तौ प्रस्थत्वारोपस्तन्मानकत्वात्। चन्दने तुलात्वस्यारोपः तद्धार्यत्वात्। गङ्गायां तीरधर्माधार
त्वारोपस्तत्सामीप्यात्। कृष्णगुणयोगाच्छकटे तद्धर्मकृष्णत्वारोपः। प्राणसाधनत्वादन्ने प्राणत्वारोपः। कुलाधिप
त्येन पुरुषे राजत्वारोप इति तद्व्याख्यातारः। न्यायवार्त्तिककारोपि साहचर्ये नाम यष्टिकया सम्बन्धस्तत्सम्बन्धात्तु यष्टिकावा
निस्येकस्मान्न तु यष्टिकेति। यष्टिकावानिति तु मुख्य एव तस्मादुपचारबीजमन्यद्वक्तव्यम्। उच्यते। यष्टिका पाता वदृयं यष्टिकाशब्देऽपि

कालजातिनिमित्तकस्तन्त्रसंयुक्तसमवेता जातिर्ब्राह्मणो ... ब्राह्मणे यष्टिकेत्याहेत्याह। गोवाहीकद

यत्नमुपादाय द्वितीयः प्रवर्त्तते इतिचतत्रैवसूत्रेभाष्ये उक्तत्वात्। नचोत्तरवर्णप्रत्यक्षकाले संस्कारवशादव्यवहितो
त्तरत्वसंबन्धेन पूर्ववर्णवत्त्वंतदुत्तरवर्णेगृह्यते· एवंतत्तदुत्तरवर्णप्रत्यक्षकाले उपस्थितविशिष्टतत्तद्वर्णवत्त्वं तत्तदु॰
त्तरवर्णेगृह्यतेइतितज्ज्ञानंसफलमम्। सरोरसइत्यादौविशेषश्च। यद्वापूर्वपूर्ववर्णजाःशब्दाःशब्दजशब्दन्यायेन चरम
वर्णप्रत्यक्षपर्यन्तंजायमानाएवसन्तीति न पदप्रत्यक्षानुपपत्तिरितिवाच्यम्। आद्योऽयंपरइत्यभिलापासंभवात्· नष्टविद्य
मानयोः संबन्धिनोरव्यवहितोत्तरत्वस्यसंबन्धतायावक्तुमशक्यत्वाच्च। एवंपदप्रत्यक्षोपपादनेपि पदस्याविद्यमान
त्वेनतत्रवृत्त्याश्रयत्वग्रहानुपपत्तेश्च। अविद्यमानेआश्रयत्वाद्यङ्गीकारेन ष्टेघटेजलवानित्यादेरापत्तेः। अविद्यमानयो
रपिजलघटयोराश्रयतानिरूपकस्याश्रयत्वस्यचत्वद्रीत्याबाधाभावात् तज्ज्ञानस्यप्रमात्वापत्तेः॥ किंचैवंपदवाक्ययोर॰
भावेनशब्दार्थसंबन्धस्यैवहानिः। तदुक्तम्। अशाब्दोयदिवाक्यार्थः पदार्थोपितथाभवेदितिपदसमुदायात्मकवाक्यस्य
ववर्णसमुदायरूपपदस्याप्यभावादुभयोरप्यर्थासंबन्धादितितदर्थः। किंचैकंपदमितिबुद्धेस्तदेवेदं कृष्णपदमितिबु
द्धेश्चानुपपत्तिःपक्षद्वयेपि। नचैकजातीयबुद्धिविषयत्वोपाधिकीचसेतिवाच्यम्। तज्जातीयमिदंपद्यमिति व्यवहा
रस्याव्यापत्तेः। तदेवेदंपद्यमितिनियमेन व्यवहाराच्च। एतेनपूर्वनरवादिनाशोत्तरंपुनरुत्पन्नेनरवादौतदेवेदंनरवंतएवे

क्येकबुद्धिविषयत्वोपाधि २

ल॰ मं॰
१९

मकेशादिवत्सादृश्येन प्रत्यभिज्ञेत्यपास्तम्। अवयवैरेवैकैकबुद्धिविषयैरेकः पर इत्यादिबुद्ध्युपपत्त्यावयविनो व्यतिरि
क्तस्य तत्वसिद्ध्यनापत्तेश्च। किंचैवमुच्चारणभेदाद्भिन्नेषु शक्तिग्रहासंभवः। व्यक्तिवाद इवानन्त्यव्यभिचारात्। व्यभिचारस्य ग्र
हीतशक्तिस्यैवैकबोधकत्वमिति सर्वसिद्धो नियमो बोध्यः। आनुपूर्वी तु तत्तत्कालघटितत्वेनाव्यवहितत्वोत्तरत्वाननुगमात्तस्यैकोच्चा
रणभिन्नेति तस्या अपि शक्ततावच्छेदकत्वे सैव दुरवस्था। तादृशाव्यवहितोत्तरत्वेनानुगमोऽपि तादृशत्वस्य दुर्ज्ञेयत्वादयु
क्त एव। व्यवधानाभावे सति घज्ञानध्वंसविशिष्टज्ञानविषयघटत्वमेवानुपूर्वी तत्परिच्छेदश्च मनसैवेति पक्षेऽपि ज्ञानव्यक्ति
भेदे नानुपूर्व्यनन्त्येव। न च चरमवर्णज्ञानव्यङ्ग्यास्तत्तत्पदकृतयोऽनन्ता जातयः शक्ततावच्छेदकत्वेन कारणतावच्छेदकत्वे
न च कल्प्यन्त इति न दोष इति वाच्यम्। अनन्तजातिकल्पने गौरवादुक्तरीत्या वृत्त्याश्रयत्वासंभवाच्च। पदानामसत्त्वेन तत्र जा
तेरप्यसंभवाच्चेति चेत्। अत्रोच्यते। प्रलये नियतकालपरिपाकानां सर्वप्राणिकर्मणामुपभोगेन प्रलयाल्लीनसर्वजगत्कामा
याचेतन ईश्वरे लीयते। लयश्चायमपुनःप्रादुर्भावफलको नात्यन्तिको नाशः उत्तरसर्गानुपपत्तेः। नापि सर्वथाऽभानम्। प्रति
भासमात्रशरीरस्य मिथ्यावस्तुनोऽनवभासे तदभावस्यैवापत्तेः। किंतु सुप्तेव तिष्ठति। कार्यप्रवृत्त्यभावात्। स्वप्रतिष्ठेश्वरप्र
काशस्यात्यन्तनिर्विकल्पकतया वद्बुलक्ष्यमाणाप्यभातप्रायैव। ततोऽपरिपक्वप्राणिकर्मभिः कालवशात्संप्रपरिपाकैः

राम॰
१९

स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिर्मायापुरुषौ प्रादुर्भवतः। ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते·
ततो बिन्दुरूपमव्यक्तं त्रिगुणं जायते· इदमेव शक्तितत्त्वम्। तस्य बिन्दोरचिदंशो बीजम्। चिदचिन्मिश्रोंऽशो नादः। चिदंशो
बिन्दुरिति। अविच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्योच्यते। अस्माद्बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं
ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव रवपरादिशब्दैर्व्यवह्रिय
ते। बिन्दोस्तस्माद्भिद्यमानाद्रवोऽव्यक्तात्मकोऽभवत् स रवः श्रुतिसंपन्नैः शब्दब्रह्मेति गीयत इत्युक्तेः। एतत्सर्वगतमपि प्राणि
नां मूलाधारे संस्कृतपवनचलनेनाभिव्यज्यते· ज्ञातमर्थं विवक्षोः पुंस इच्छया जातेन प्रयत्नेन योग एव मूलाधारस्थपव
नस्य संस्कारः तदभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं परावागित्युच्यते। तदुक्तं हरिणा। अनादिनिधनं ब्रह्म शब्दतत्त्वं य
दक्षरम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यत इति। तदेव नाभिपर्यन्तमागच्छता तेन वायुनाभिव्यक्तं मनोविषयः पश्यन्ती
त्युच्यते· एतद्द्वयं सूक्ष्मतमसूक्ष्मतरमीश्वराधिदैवं योगिनां समाधौ निर्विकल्पकसविकल्पकज्ञानविषय इत्युच्यते· ततो हृदयपर्यन्त
मागच्छता तेन वायुना हृदयदेशेऽभिव्यक्तं तत्तदर्थविशेषतत्तच्छब्दविशेषोल्लेखिन्या बुद्ध्या विषयीकृता हिरण्यगर्भदैवत्या
परश्रोत्रग्रहणायोग्यत्वेन सूक्ष्मा मध्यमा वागित्युच्यते। स्वयं तु कर्णपिधाने सूक्ष्मतरवाय्वभिघातेनोपांशुशब्दप्रयोगच

ल॰ मं॰

श्रूयमाणा सेत्याहुः। एतदवस्थात्रयमपि स्थूलसूक्ष्मतमसूक्ष्मतरसूक्ष्मप्रणवरूपम्· सैव चास्य पर्यन्तमागच्छता तेन वायुना
कण्ठदेशं गत्वा मूर्द्धानमाहत्य परावृत्य तत्तत्स्थानेष्वभिव्यक्ता परश्रोत्रेणापि ग्रहणयोग्या विराडधिदैवत्या वैखरी वागि
त्युच्यते। प्रणव एव व्यानोदानाभ्यां सह वैखरीरूपं प्रतिपद्यते। अत एव हरिणा व्याकरणस्य त्रिविधा वाग्विषय इत्युक्तम्।
वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्। अनेकतीर्थभेदायास्त्रय्या वाचः परं पदमिति। एतद्व्याकरणम्। अनेकती
र्थेति· श्लिष्टव्यक्तवर्णरूपाः प्राप्तसाधुभावाः पश्वादिदुन्दुभिवेणुवीणादिशब्दरूपा चेत्यर्थः। तत्र मध्यमायां योनादांश
स्तस्यैव स्फोटात्मनो वाचकत्वेनास्ते· सच यद्यप्येकोऽखण्ड एकैकवर्णेनाप्यभिव्यज्यते। तथाप्यन्त्यवर्णाभिव्यक्तो बोध
हेतुः। अतोनेकवर्णजाभिव्यक्त्युत्तरमर्थप्रत्ययः। तत्र च व्यञ्जकरूपप्रतिबिम्बनात्तद्रूपरूषितेव तदभिव्यक्तिरिस्येकोपि
नानात्वमिवापन्नः। यथा जलचाञ्चल्येनेन्दुप्रतिबिम्बस्य चलत्वेन ग्रहणं यथा च स्फटिकादेर्जपाकुसुमाद्युपाधिवशात्तद्
रूपरूषितस्य भानं यथा च मुखे मणिकृपाणदर्पणाद्यभिव्यञ्जकवशाद्दैर्घ्यवर्तुलत्वादिभानं तद्वत्। प्रतिबिम्बसमर्पकाश्च सं
स्कारास्ते च स्थिरा एव। नचैवमनेककालिकत्वद्वैखर्यभिव्यक्ते औपाधिकनानात्वात्तवाप्यनुगमाय जातिरावश्यकी। स
हस्रदीपाभिव्यक्तघटस्येवानेकजपाकुसुमाभिव्यक्तस्फटिकस्येव च नानात्वाभावात्· उपाधिभिन्नव्यञ्जकाभावान्न क

२० रा म॰ २०

ज्ञापिवर्णा हि त्येन तत्प्रत्यक्षम्। येनक्रमेणचचित्तेसंस्कारास्तेनैवक्रमेणव्यञ्जकरूपस्तुषितत्वात्स्येतिस्वीकारान्नसरोर
सङ्गत्यनयोरविशेषः। तत्रचतदुत्तरत्वग्रहश्चित्तभित्तौ दैशिकएव। तदुपरागनाशिकावृत्तज्ञो ध्यार्थाकारवृत्तिरिव। अयंचा
न्तरत्वाच्छ्रोत्रग्राह्यवैखरीसंस्कृतान्तःकरणग्राह्यएव। व्यञ्जकरूपस्तुषितस्यतस्यैवार्थसंकेतग्रहः। अतोघटकलशादिपर्या
याभिव्यक्तेस्फोटेगृहीतशक्तिकस्यपुंसोऽप्रसिद्धपदश्रवणेनार्थबोधः। वैखरीतुवायोरणूनांज्ञानस्यशब्दत्वापत्तिरिष्यते। के
श्चिद्दर्शनभेदोऽत्रप्रवादेष्वनवस्थितइतिहस्युक्तेः पातञ्जलभाष्येव्यासेनापितथोक्तेश्चाख्यानोपयोगइतिसूत्रेपतञ्जल्युक्ते
श्चवाय्वादिपरिणामरूपाकण्ठताल्वाद्यभिघातजन्यैवेतिबोध्यम्। वायोःप्राणादिरूपस्यअणूनांशब्दतन्मात्रादिरूपपरमा
णूनाम्। अप्राणीवप्रचीयन्तेशब्दाख्याःपरमाणवइतिहर्युक्तेः छायातपतमांस्यप्येवम्। अणवःसर्वशक्तित्वाद्भेदसंसर्गवृत्तयः।
छायातपतमश्शब्दभावेनपरिणामिनइतितदुक्तेः। ज्ञानस्यवक्तृज्ञानस्यपराशक्तिसाहित्येनचतत्परिणामइतिबोध्यम्। केश्चि
दित्यनेनपराशक्तेरेवमध्यमावत्परिणामविशेषोन्येषांमतेवैखरीतिसूचितम्। तदाह प्रवादेषु शास्त्रेषु अत्रविषयेदर्शनभेदः।
सिद्धान्तभेदोऽनवस्थितइति आत्माबुद्ध्यासमेत्यार्थान्मनोयुङ्क्ते विवक्षया मनःकायाग्निमाहन्तिसप्रेरयतिमारुतम् सोदीर्णोमू
र्ध्न्यभिहतोवक्त्रमापद्यमारुतःवर्णान्जनयतेइतिशिक्षायाअपिपराख्यमन्तःस्थितंशब्दंवर्णत्वेनाभिव्यनक्तिइत्यर्थः। मरुरं

ल॰म॰ २१

वशाभेकूर्ध्वमुद्यन्मूर्ध्न्यभिहतोऽन्येन पुनरुद्यतोऽभिहन्यमानआत्मानंतत्त्वेनाभिव्यनक्तीत्यर्थो वा। आत्मान्तःकरणं संस्पृश्य स्वरू-
पेण स्वगतानर्थान्बुद्ध्यास्वकृत्या समेत्यैकबुद्धिविषयीकृत्य तद्बोधनेच्छायुक्तमनोऽभिहतकायाग्निप्रेरितो वायुर्मूर्द्धपर्यन्तं
गतस्ततः प्रतिनिवृत्तो वक्त्राभिघातेन वर्णाञ्जनयतीत्यक्षरार्थः। तदुक्तं परः सन्निकर्ष इति सूत्रे भाष्ये · उच्चरितप्रध्वस्तानां स-
न्निकर्षः पौर्वापर्यं चानुपपन्नमित्याशङ्क्य बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्णधीरः स्तन्वन्नीतिः शब्देनार्थान्वाच्यान्दृष्ट्वा बुद्धौ कु-
र्यात्पौर्वापर्यम्· बुद्धिविषयमेव शब्दानां पौर्वापर्यं य एष मनुष्यः प्रेक्षापूर्वकारी भवति स पश्यति। अस्मिन्नर्थे यं शब्दः प्रयोक्त-
व्यो ऽस्मिंश्च शब्दो यं तावद्वर्णस्ततो ऽयं ततो ऽयमिति तन्वन्नीतिः सकलविषयव्यापिबुद्धिः धीरः पण्डितः कर्ता बुद्धौ अन्तःक-
रणे चेष्टाः कण्ठाद्यभिघातव्यापारजन्यशब्दान्प्रतिबिम्बितान्कृत्वा शब्देन सहितांस्तद्वाच्यानर्थान्बुद्धिरूपे देशे दृष्ट्वा तत्रै-
व पौर्वापर्यं व्यवहारं कुर्यादित्यर्थः। बुद्धिविषयमित्यस्य बुद्धिस्थशब्दविषयमेवेत्यर्थः। तत्र वक्तुर्देशेनैव शास्त्रप्रवृत्तेस्त-
स्यैव धर्मफलश्रवणाच्च वक्तृबुद्धिस्थत्वमुपपादयति य इति। अस्मिन्नर्थे इति। एतदर्थमेव बुद्धावर्थदर्शनमप्युक्तम्। श्लो-
के पौर्वापर्यमित्युपलक्षणम्। अयमिति बुद्ध्युपारूढस्वमात्रश्रव्यसूक्ष्मोच्चारणव्यङ्ग्यशब्दपरामर्शः। अन्यथेदमः प्रत्य-
क्षपरामर्शकत्वादेतदनुपपत्तिः। शब्दः प्रयोक्तव्यः परप्रत्यययोग्यस्थूलोच्चारणरूपेण प्रयोगेणाभिव्यक्तव्यः। अस्मिं-

रा॰म॰ २३

न्शब्दे इत्यस्य व्यञ्जनीये इति शेषः। यत्तु बुद्धिगतपौर्वापर्यस्य वर्णेष्वारोप इत्येतद्भाष्यार्थ इति। तन्न। तद्वदेव तद्बु-
द्धीनामप्युत्पन्नविनाशितया प्रत्यक्षपरामर्शके दमादिघटिताभिलापाभिलप्यमानस्य पौर्वापर्यस्य तत्राप्यसंभ-
वात्। प्रकृतिविकृतिभावोऽप्यन्तःकरणस्थेकारबुद्धिमपहाय यकारबुद्धिकरणादुपपद्यत इति स्थानिवत्सूत्रे भा-
ष्ये स्पष्टम्। अयं च शब्दस्तत्तत्प्राणिहृदयदेशावच्छिन्नाकाशदेशस्थः सर्वसमष्टेर्विराजो हृदयरूपबाह्याकाशदेश-
स्थश्च। स च लाघवादेक एव विभुः। यथैकत्र श्वेतद्रव्ये रूपं व्यापकं तथास्याप्याकाशदेशस्य तथात्वमुचितम्। एक
इन्द्रशब्दः क्रतुशते प्रादुर्भूतो युगपत्सर्वयागेष्वङ्गं भवतीति सरूपसूत्रे भाष्यात्। प्रादुर्भूतोऽभिव्यक्तः स एव कत्वादि-
नाभिव्यक्तः श्रोत्रग्राह्यः पदादिरूपेण तु बुद्धिग्राह्यस्त्व इत्यणुदित्सूत्रे भाष्ये स्पष्टम्। अत्र हि श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः
प्रयोगेणाभिज्वलित आकाशदेशः शब्द इत्युक्तम्। तत्र श्रोत्रोपलब्धित्वं कत्वादिनाभिव्यक्तस्य पदादिरूपेण तु बुद्धिनिर्ग्रा-
ह्यत्वम्। स च प्रयोगेण वैखरीरूपेणाभिज्वलितः स्वस्वरूपरूषितः कृत इत्यर्थः। अन्यथा कदम्बमुकुलादिन्यायेनानन्तश-
ब्दजशब्दानां तत्प्रागभावध्वंसानां च तत्तत्स्थानुपपत्त्या कल्पने गौरवं स्यात्। न च किंचिद्दूरदेशपर्यन्तमुत्पत्तिवद्
ममाभिव्यक्तिरपि तावद्दूरपर्यन्तमेवेति न दोषः। अत एव कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रेण तद्ग्रहः स्वसमवेतश

ल॰मं॰ २२

ब्दस्यैव तेन ग्रहणात्। नन्वाकाशदेशः शब्द इत्यसंगतम्। आकाशसत्त्वे मानाभावात्· न च शब्दगुणित्वात् तत्सिद्धिः।
शब्दस्याकाशगुणत्वासिद्धेः। स्पर्शवद्द्रव्यविशेषगुणत्वस्यैव शब्दे ङ्गीकारात्। न च यावद्द्रव्यभावितया श्रयादन्यत्रा
नुपलब्ध्यापत्तिः। तादृशनियमानङ्गीकारात्। न वा व्यन्यदेशावच्छिन्नाकाशाश्रयस्य कर्णशष्कुल्यवच्छिन्नउपलब्धात्
न च द्रव्यग्राहकेन्द्रियग्राह्यविशेषगुणयोगित्वमेव स्पर्शवतामिति वाच्यम्। तस्य नियमस्य स्ववासनाकल्पितत्वात्।
अत एव भाष्ये व्याकाशदेशाद् इत्येवोक्तं न त्वाकाशगुण इतीति चेन्न। आधारशक्तिः प्रथमा सर्वे संयोगिनामयम्· इदम
त्रेति भावानामभावानां च कल्प्यते। व्यपदेशस्तमाकाशनिमित्तं तु प्रचक्षते· कालात्क्रिया विभज्यन्ते आकाशात्सर्वमू
र्तयः। एतावानेव भेदो यम भेदोपनिबन्धन इति हरिणैव समाधानात्। इदं नक्षत्रचक्रमत्र तिष्ठति अत्रैतद्भव इति नि
र्दिष्टवस्तुविषये पृथ्व्यादेराधारत्वासंभवेन तदाधारस्यैवाकाशसंज्ञकत्वात्। एवं च पृथ्व्यादीनामपि परमाणुद्वारा

राम॰ २२

स एवाधार इति सर्वभावानामाधारशक्तिराकाशाश्रया· आधारशक्तिरयमिति तु शक्तिशक्तिमतोरभेदादुक्तम्। एवं
चाधारशक्त्यैवान्यथानुपपन्नयाकाशसद्भावावगमः इदमाकाशस्याधारत्वं सिद्धस्वभाववस्तुविषयम्· सा
ध्यस्वभावक्रियाविषयं तु कालस्याधारत्वमित्याह· कालादिति। जन्मस्थितिनिरोधेषूपकुर्वन् कालः क्रियाधार

इति। एतच्चोपरिष्टात्स्फुटीभविष्यति। मूर्त्तिपदं क्रियातिरिक्तसर्वपदार्थबोधकम्। अयं भेदः आकाशः काल इति भेदः एव
इति। एतच्चोपरिष्टात्स्फुटीभविष्यति। मूर्तिपदं क्रियातिरिक्तसर्वपदार्थबोधकम्। अयं भेदः आकाशः काल इति भेदः एव
त्वावानेव- व्यावहारिक एव। ननु किं तर्ह्ययं निर्निबन्धन एव नेत्याह। अभेद इति- भेदरहितं यद्ब्रह्म तदुपनिबन्धनं वस्तु
भूतं यस्य स इत्यर्थः। ईश्वर एव तत्तदाधारत्वविशिष्टस्तत्तत्संज्ञां लभते इति तात्पर्यम्। अखण्डः काल इति मते तस्येश्वरा
तिरिक्तत्वखण्डनमिदं बोध्यम्। एवं च सर्ववस्त्वाधारदेशत्वेन शब्दस्यापि तद्देशत्वं श्रोत्रोपलब्धिगुणेन भाष्य उक्तम्। क
र्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वे नेन्द्रियाणामसंबद्धविषयाग्राहकतया तत्तद्भूतसंबद्धगुणस्यैव तत्तदिन्द्रियग्राह्य
तयाचाकाशदेशस्थत्वमेव शब्दस्येत्याशयात्॥ केचित्तु तन्न श्रोत्रं तस्य छिद्रे नित्यतयारोगादिना नाशासंभवेन बाधिर्यानु
नापत्तेः। न च धर्मविशेषविशिष्टं नभः श्रोत्रं- तस्य च धर्मस्यारोगादिनाभिभव औषधेन च तदुद्भव इति वाच्यम्। लाघवेनन भो
धिष्ठानकधर्मविशेषस्यैवाहंकारिकस्य श्रोत्रत्वौचित्यात्। एवमन्यान्यपि घ्राणादीनि तदेकरूप्याय पृथिवीजलवायुते
जोधिष्ठानकानि आहंकारिकाण्येव। अत एव योगीन्द्रियाणामत्यन्तदूरदेशस्थविषयोपलब्धिजनकत्वम्। पृथ्व्यादिवि
काराणां तावद्दूरगमनासंभवात्। अहंकारस्य त्वन्तःकरणपरिणामत्वादन्तःकरणस्य चाधुनापि बहुदूरदेशगमनान्मदा
त्। तद्विकाराहंकारविकाराणां तत्संभवात्। योगस्तत्प्रतिबन्धकतमो निवर्तक एवेत्यग्रे निरूपयिष्यामः। तत्तत्क्रमस्य गुणा

ल·म
२३

धिष्ठानानि च तानि भूतानि तेषु च गुणा अनुद्भूतास्तत्तद्गुणसामानाधिकरण्यात् पृथ्व्यादिगतगुणग्रहणमिन्द्रियैः। एवं च श्रोत्रमे
व चित्तवृत्तिसहकृतस्ववृत्तिपरंपरया शब्ददेशमागतं शब्दं गृह्णाति। अत एव तत्तद्देशवर्तित्वेन शब्दप्रतीतिः। यद्वाणूनां सर्व
शक्तिनां सर्वदेशव्यापितया तेजोनभआदिपरमाणूनां विषयदेशपर्यन्तं तत्तदिन्द्रियस्यजत्तद्विषयोन्मुख्ये तत्तदिन्द्रियरू
पेणपरिणामात्तत्तद्देशे प्रत्यक्षमिति वदन्ति॥ तन्मते प्युक्तयुक्त्याकाशदेशत्वमेव। किंचानन्तश्रोत्रवृत्तिकल्पनापेक्षयानन्तपर
माणपरिणामकल्पनापेक्षया च तत्स्यैकस्य कल्पने लाघवम्। तत्तद्देशव्याप्याभिव्यक्तिमत श्रुतेन ग्रहणमिति तत्तद्देशवर्तित्वानुभ
नं विरुद्धः। यथा चैकस्याप्याकाशस्य घटाकाशमठाकाशद्वयोपाधिको भेदो यथा चैकस्यैव चेतनस्योपाधिको जीवेश्वरभेदो जीवा
नाच परस्परभेद एवमौपाधिकं भेदं लोकसंमतमाश्रित्याकृतिग्रहणात् सिद्धमिति तत्सूत्रे भाष्ये उक्तम्। किंच जातिरपि मास्तु
रूपसामान्यादेव स्थूलकृशाल्पमहद्ध्रस्वदीर्घगोघटादिषु गौरित्यादिवत् सर्वत्रैकाकारव्यवहारः। अन्यथा संस्थानभेदा
दनुगतसंस्थानव्यङ्ग्या जातिरपि तन्न स्यादित्याशयेन रूपसामान्याद्वा सिद्धमिति तत्रैव भाष्ये उक्तम्। रूपसादृश्यादिति त
दर्थः। एतेन वर्णा संगृहीतसंकेतानां व्यञ्जकत्वमगृहीतसंकेतानां वा। आद्ये तैरेवोपपत्तौ किं तेन। नान्त्यः सर्वस्याप्यर्थबो
धापत्तेः तदुक्तं सांख्यसूत्रे प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्द इति यदि वर्णसमुदायेन तत्प्रतीतिस्तदोक्तरीत्या तद्वै

राम·
२३

स्यैवौचित्यादित्याशङ्क्यैवं तर्हि स्फोटः शब्दो ध्वनिः शब्दगुणः। कथं यथा भेर्याहन्ता भेरीमाहत्य कश्चिद्विंशतिपदा
नि गच्छति कश्चित्त्रिंशत्कश्चिच्चत्वारिंशत् स्फोटस्तावानेव ध्वनिकृता वृद्धिः ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु
लक्ष्यते· अल्पो महांश्च केषांचिदुभयं तत्स्वभावत इति। स्फोटः शब्द इति। श्रोत्रेन्द्रियग्राह्यः स्फोटनामा पदार्थः शब्दः
ध्वनिस्तदभिव्यक्त्युत्तरं जायमानो वैकृतध्वनिरूपः। शब्दस्य चिराचिरोपलब्धिकरत्वाद्गुण उपकारकः। भेरीमाहत्ये
त्यस्य तं शब्दमुपलभमान इति शेषः। ध्वनिरूपेणापि स्फोट एव गृह्यते। इति दृष्टान्तदार्ष्टान्तिकोभयसाधारणमाह· स्फो
टस्तावानेवेति। ध्वनिकृता वैकृतध्वनिकृता ध्वनिः स्फोटस्य स्त इति शेषः। शब्दानां संबन्धी ध्वनिर्वैकृतध्वनिस्तु केषां
चिदल्पोऽल्पकालमुपलब्धिजनकः· केषांचिन्महान्बहुकालोपलब्धिजनको लक्ष्यते। तत्र प्रमाणमाह। उभयं तत्स्व
भावतः। सिद्धमिति शेषः। नदुक्तं हरिणा। स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः। स्वभावतस्तु नित्यत्वाद्ध्रस्व
दीर्घप्लुतादिषु। प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्यते। अभिन्नकालत्वोपपादकं स्वभावतस्तु नित्यत्वादिति· प्रा
कृतध्वनिशब्देन स्फोटव्यञ्जकमत्रोच्यते स्फोटस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते। ग्रहणेऽभिव्यक्तौ। स्थितिभेदे निमि
त्तत्वं वैकृतः प्रतिपद्यते। स्थितिभेदे चिराचिरोपलब्धिविशेषे। शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः। ध्वनयः स

ल.म.
२८

मुपोहन्तेस्फोटात्माऽतैर्नभिद्यतेइति।शब्दस्याभिव्यक्तेरूर्ध्वंवैकृताध्वनयोजायन्तइतिशेषः।तेतुवृत्तिभेदेद्रुतादिवृत्तिभेदे
समुपोहन्तेतन्नकारणंभवन्ति।स्फोटस्तुतैर्नभिद्यतइतितदर्थः।वैकृतत्वंचैषामालस्यादिकृतत्वात् केचित्तुअत्रव्यञ्जक
शब्दोवैकृतध्वनिपरः तस्याप्युपलब्धिजनकत्वेनव्यञ्जकत्वव्यवहारइतिदिक्॥एवंचपदादिरूपआन्तरस्फोटोवाचकइति
सिद्धम्॥एवंशब्दवदर्थोपिबुद्धिसत्तासमाविष्टएव।ननुबाह्यसत्ताविष्टः।घटइत्यतएवसत्तावगमेनघटोस्तीतिप्रयोगेगता
र्थत्वादस्तीतिप्रयोगानापत्तेः।सत्तायाः विरोधाद्घटोनास्तीत्यस्यानापत्तेश्च।ममतुबुद्धिसतोबाह्यसत्तातदभावबोधना
यास्तिनास्तीतिप्रयोगः।किंचशशशृङ्गंनास्तिअङ्कुरोजायतेइत्यतोबोधानापत्तेः।ममतुबुद्धिसन्नङ्कुरोबाह्यरूपेणजायतइत्य
र्थः।सासत्तापिशब्दवाच्येतितद्भावः।किंचेच्छादीनामन्तःकरणनिष्ठतयातत्तद्विषयस्यसामानाधिकरण्येनैवकारणत्वौ
चित्येनबौद्धपदार्थसत्तावश्यकी॥यत्तुवैशेषिकाद्यनुसारिणोविषयतासंबन्धेनज्ञानंप्रतितादात्म्येनविषयःकारणमिति
वदन्ति।तन्न।तदीयतादात्म्यस्यवृत्त्यनियामकतयासामानाधिकरण्यानिर्वाहकत्वात्।अतीतानागतस्थलेतयोरेवसं
बन्धनैवसंबन्धस्यवक्तुमशक्यत्वाच्च।घटादिसामग्र्याअप्यवच्छेद्यावच्छेदकभावसमानाधिकरणदैशिकविशेषणतयादेश
विशेषसामानाधिकरण्यंदृष्टम्।[illegible]घटइत्यादिव्यवहारासाधारणनियामकत्वम्‌ अवच्छेदकत्वंसत्त

राम
२८

म्यर्थ इति दुश्चिन्त्यमेव-अनुशासनाभावात्। सुप्तिभक्तौ लक्षणाभावस्य भवदीयसंमतत्वाच्च। द्रव्यरूपादीनामपि द्रव्य
देश एव देश इति बोध्यम्। धर्मैः धिष्ठानत्वमपि बौद्धस्यैव न बाह्यस्येति सर्वं समञ्जसम्। अत एवोपदेशेऽजनुनासिक इ
ति सूत्रे भाष्ये उक्तम्। को देवदत्त इति प्रश्ने ऽङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुरीदृशो देवदत्त इति। तत्र तत्त्वेकव्यक्तौ भेदाभा
वादीदृश इत्यस्यासङ्गतिः। मम तु एतैः शब्दैर्यो ऽदृशोऽर्थो बुद्धौ प्रतिभासते तादृशो बाह्य इत्यर्थः। अत्रेदृशतादृशशब्दाभ्यां
तत्त्वेन प्रत्यभिज्ञाविषयत्वमुपलक्ष्यत इति बोध्यम्। हेतुमति चेति सूत्रे पङ्क्तिविंशतीति सूत्रे मतुप्सूत्रे च भाष्ये कैयटयोः स्पष्ट
मिदम्। गौतमोऽप्यसत उत्पत्तिकर्तृत्वं कथमित्याशङ्क्य सूत्रितवान्। बुद्धिसिद्धं तु तदसदिति। तत्कार्यमुत्पत्तेः प्राग्नाशोत्तरं च

सद्रूपबुद्धिविषयतया सिद्धमिति तदर्थः। जन्मादिसूत्रे वाचस्पतिरप्याह। चेतनो हि नामरूपे बुद्धावालिख्य घट इति नाम्ना कम्बु
ग्रीवादिना च रूपेण च बाह्यं घटं निष्पादयति। निर्वर्त्यस्यापि घटस्यान्तःसंकल्पात्मना सिद्धस्य कर्मकारकत्वं घटं करोतीत्यादौ।
यदाह बुद्धिसिद्धं तदसदितीति। तथा हि। चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण संप्रयुज्य सू
क्ष्मावस्थारूपविषयवासनावशात् तत्तद्विषयाकारेण परिणमते न तु तस्यां संप्रयुक्तबाह्यविषयप्रतिबिम्बः। स्वप्नादौ बाह्य
विषयासंयोगेन तत्प्रतिबिम्बासंभवात्। तथा च स्मृतिः। विप्र पृथ्व्यादि चित्तस्थं न बहिष्ठं कदाचन। स्वप्नभ्रममदाद्येषु

संनिकृष्टज्ञानाकारं विहाय १

सर्वैरेवानुभूयत इति भ्रमे ज्ञानाकारस्यैव विषये आरोप इति सिद्धान्तात्। सन्निकृष्टदूरस्थरजताद्यारोपेमानाभावात्। नद्याद

अ.म. दृश्यमधुना नास्तीति स्वरूपतो बाधानुभवस्यानुपपत्तेश्च। चाकचिक्यादि विषयदोषवशाच्च चित्तवृत्तेस्तथा परिणामः। ए

२१ तेन ज्ञानलक्षणसन्निकर्षेण हृष्टेऽनुभूतरजतधर्मप्रकारिका शक्तिप्रतीतिरित्यपास्तम्। अन्यथोपपत्तेः। न च तदनुयोगि

ताप्रतियोगिताऽविशिष्टसंबन्धस्य कल्प्यनुभवाभावाच्च। संबन्धत्वस्य हि द्विष्ठत्वस्वरूपतया तत्तदनुयोगिकत्वादिर हितस

बन्धभानस्यायुक्तत्वात्। तत्तदनुयोगिकत्वादिवैशिष्ट्येन ज्ञातस्यैव प्रवृत्त्याद्युपयोगित्वाच्च। वस्तुतो ज्ञानलक्षणाप्रत्या

सत्तिरेव नाविद्यमानस्य प्रत्यासत्तित्वायोगात्। न च ज्ञानविषयत्वं प्रत्यासत्तिः। ज्ञानविषयोभयस्वरूपाविषयते तिमन्ते

ज्ञाननाशे तस्या वक्तुमशक्यत्वात्। तस्मात्स्मृताविव संस्कार एव प्रत्यासत्तिः। एवं च मदुक्त एव पर्यवसानम्। सुरभिचन्द

नं सोयमित्यादि च संस्कारचक्षुःसन्निकर्षोभयजन्यं ज्ञानान्तरमेवेति न स्मृतित्वानुभवत्वयोस्तत्र संकरः। अत एव

स्त्रियामिति सूत्रे स्वप्नादौ स्तनकेशादि दर्शनेन लिङ्गाभावात्प्रापोऽनुपपत्तिमाशङ्क्यासत्तु मृगतृष्णावद्गन्धर्वनगरं यथा — राम.

। असत्तु स्वप्ने वृक्षयोर्लिङ्गं दृष्टव्यम्। कथं पुनरसल्लिङ्गं शक्यं द्रष्टुं मृगतृष्णावत्। तद्यथा मृगास्तृषिता अपांधाराः पश्य — २१

न्ति न च ताः सन्ति यथा गन्धर्वनगराणि दूरतो दृश्यन्ते [illegible] यमुपचक्रम्। अनेन हि समस्तमेव भ्रमेब

हिस्तद्देशेऽसत एव भानमुक्तम्। हरिणाप्युक्तम्। यथा सलिलनिर्भासो मृगतृष्णासु जायते- जलोपलब्ध्यनुगुणाद्बीजाद्बुद्धि
जैले: सति- इति। बीजं पूर्वपूर्वमिथ्याज्ञानजन्यवासनेति तट्टीकाव्याख्यातारः। व्यवहारदशायां कदापि केनापि तत्त्वानैव बाधान
नुभवाद्सतो लिङ्गस्य भानमित्येतन्निराकृतमित्यन्यत्। भ्रमे यावद्विशेषदर्शनं बहिः सत्त्वेन प्रतीतिस्तत्राधिष्ठानग
तसत्त्वारोपात्। अत एव सदसत्त्ख्यातिर्बाधाबाधाभ्यामिति सांख्यसूत्रेणोक्तम्। यावद्विशेषदर्शनमबाधस्तदुत्तरं च
बाधोऽस्ति। प्रपञ्चोऽप्येवमेव मृगतृष्णादिदृष्टान्तेन प्रपञ्चस्य शास्त्रे वर्णनात्। तदुक्तं परमार्थसारे शेषनागेन। मृगतृष्णा
पासुदके शुक्तौ रजतं भुजङ्गमो रज्ज्वां मूर्ते तिमिरेक्षचन्द्रयुगवद्भ्रान्तमखिले जगद्रूपमिति भ्रान्तं भ्रमविषयवस्त्वर्थः।
व्यासोऽपि मायामात्रं तु कार्त्स्न्येनानभिव्यक्तेरिति स्वप्नप्रपञ्चस्य मायामात्रत्वं न तु बाह्यसर्गतुल्यत्वमाह। तत्रैव यद्यपि
जाग्रत्प्रपञ्चस्यापि तदनन्यत्वमारम्भणशब्दादिभ्य इति सूत्रेण मायामात्रत्वमुक्तं तथापि प्राग्ब्रह्मात्वदर्शनाद्वियदादि
प्रपञ्चो व्यवस्थितः- स्वाप्नस्तु प्रतिदिनं बाध्यत इति विशेष इति भाष्ये उक्तम्। तस्य प्रपञ्चस्यान्यवस्तुत्वाभावः। वाचा
रम्भणं विकारो नामधेयमिति श्रुतेरिति सूत्रार्थः। वाचैव केवलमारभ्यते यतो नाममात्रं न तु वस्तुत इति श्रुत्यर्थः। अत एव
त्वेऽचानन्यत्वेऽपि कार्यस्य कारणात्मत्वं न तु कारणस्य कार्यात्मत्वमिति न तु दृष्टान्ताभावादिति सूत्रे भाष्ये। कार्यस्य वस्तुत्व

भावादितितदाशयः। मायामात्रमितिमात्रपदेनानिर्वचनीयोत्पत्तिवादमपिनिराकरोति। नचनतत्ररथानरथयोगानप
न्थानोभवन्ति-अथरथान्रथयोगान्पथः सृजतइतिस्वप्नविषयश्रुत्युक्तसृष्ट्यसंगतिरितिवाच्यम्। उपक्रमेरथाद्य
भावःश्रुत्योक्तइतिसृष्टिवचनंभाक्तमितिभाष्येणैवसमाधानात्। किंचतास्यरथादिग्रहणायचक्षुरादीनिसन्तिर
थादिनिर्वर्त्तनेवाकुतोनिमेषमात्रेणसामर्थ्यंदारूणिचनसन्ति। तस्मान्मायामात्रंस्वप्नदर्शनमितितादृशमपीष्टानिष्टसू
चकमितिचभाष्येस्पष्टम्। अत्रान्तःकरणपर्यन्तनष्टवृत्तिकत्वाच्चस्फुरादीनिनसन्तीत्युक्त्याविशिष्टज्ञानाध्यासोदर्शि
तः। सामग्रीव्यतिरेकाच्चानुत्पत्तिंवदताशुक्तिरजतादिस्थलेप्यनुत्पत्तिःसूचिता। तथाचतुर्थेपिभाष्ये-मृत्पिण्डा
दिदृष्टान्तेर्हिसतोब्रह्मणएकस्यसत्यत्वंविकारस्यचानृतत्वंप्रतिपादयतिशास्त्रमतःसृष्टिवाक्यानिनोत्पत्त्यादिप
राणिकिंत्वैकात्म्यावगमपराणीति-सतइत्यस्याद्यन्तयोःसत्वेनमध्येपिसत्त्वानुमानेनकालत्रयाबाध्यत्वरूपंसत्य-
त्वम्। प्रपञ्चस्यत्वाद्यन्तयोरसत्वेनमध्येपिअसत्वानुमानेनकालत्रयबाध्यत्वरूपमनृतत्वमित्यर्थः। मध्येकदाचि
त्सत्त्वेनप्रतीतिस्तुभ्रमएवेतितदाशयः। उत्पत्त्यादीनांभ्रमविषयाणामेवतत्रानुवादइतिविकारत्वादिप्रतीतिरपिभ्रम
एवतितत्तात्पर्यम्। मृत्पिण्डादिदृष्टान्तस्यचायमर्थः। एकेनमृत्पिण्डेनपरमार्थतोमृदात्मनाविज्ञातेनसर्वंमृन्मयंघट

शरावादिमृदात्मकमितिविज्ञानं भवतीति यथा च तल्लोभयथेति सूत्रेऽपि भाष्ये स्वाप्नो विकारो वासनामय एव न तु पारमार्थिको
स्तीति यथा तन्त्रान्तरे घटादिप्रपञ्चस्य पारमार्थिकत्वं तथा तत्रापि न स्वाप्नस्येत्यर्थः। अस्माकं तु व्यावहारिकोऽपि प्रपञ्चो दी
र्घस्वप्न एवेति बोध्यम्। तदनन्यत्वमिति सूत्रे भाष्यम्। यथा च मृगतृष्णोदकादीनामूषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्
एवमस्य प्रपञ्चस्य ब्रह्मव्यतिरेकेणाभाव इति। सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मविज्ञानात्सत्यत्वं स्वप्नव्यवहारस्येव प्राक्प्रबोधा
दिति चाविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धोऽपि भागो व्यवहारः स्वप्नवद्व्याहृत इति चान्यत्र भाष्ये॥ यत्त्वनिर्वचनीयं स-
दसद्विलक्षणं जलादि मृगतृष्णादावुत्पद्यते। एवं ब्रह्मणि प्रपञ्चो मृदादौ घटादिः स्वाप्नश्चेति। तन्न। तादृशानिर्वचनीयस्याप्रसि
द्धात तदिदं तस्य वक्तुमशक्यत्वात्। किं च तस्य सद्भिन्नत्वादसत्त्वमसद्भिन्नत्वात्सत्त्वमापततीति उभयरूपत्वमेवायातितत्र सत्त्व
मारोपितमिति भेदाभेदयोरिव तयोर्न विरोधः। धर्मद्वयानाक्रान्तस्य लोकव्यवहारेऽभावाच्च। तदुक्तं सांख्यसूत्रे। नासतः ख्या
तिर्नृशृङ्गवत्। नानिर्वचनीयस्य तदभावात्। नान्यथाख्यातिः स्ववचोव्याघातादिति। असतः ख्यातौ नृशृङ्गवच्छुक्तिरजता
देरप्यभानापत्तिः। न च नृशृङ्गमित्यादिशब्दतो बोधात्तद्वासनावश्यकत्वेन तत्र तेषामपि सत्त्वेन प्रत्यक्षापत्तिः। तद्वासनायाः
फलबलेन शाब्दबोधमात्रजनकत्वेन तदापत्त्यभावात्। नानिर्वचनीयस्येत्यस्यार्थ उक्त एव। यद्यप्यन्यथाख्यातिः सौत्रान्ति

कस्यबाधप्रसङ्गाच्च। नैद्वान धर्मरजतादेरध्यासइतितेनाङ्गीकाराच्चथापिहट्टस्थरजतादेरापोपड्ङितिरीत्याबेशेषिकैः स्वकीयैः आःहता। ननुभयप्रपिन
ष्ट्मतदसत्त्वेन तद्रूपस्मृत्सन्निकर्षाभावेनासन्न भासतेसन्निकर्षाभावादितिस्वसिद्धान्तव्याघातात्। किंचविशेष्यविशेषणा नु योगिकत्वप्र१
तियोगिकत्वविशिष्टसंबन्धस्यत्त्वथाप्यसतएवभानाङ्गीकारात्तदग्रहेऽसंसर्गाग्रहएवपर्यवसानमितिविशिष्टभ्रमवाचकस्या
न्यथाख्यातिरितिवचसोव्याघातात्। किंचज्ञानस्यार्थव्यभिचारित्वे ज्ञानेनार्थसिद्धिरितिस्ववचोव्याघातादितिदिक्॥ परमार्थ
सारेपि। त्रिगुणाचेतन्यस्मिन्सर्वगतेवस्थितारिवलाधारे। कुरुतेसृष्टिमविद्यासर्वात्मा स्पृश्यतेनयानात्मा। सृष्टितन्त्रमभिस्य
र्थः। तदप्युक्तंतत्रैव-रज्ज्वाभुजङ्गहेतौ प्रभवविनाशौयथानस्तः। जगदुत्पत्तिविनाशौ नचकारणमस्तितद्वदिहेतिभुजङ्गहेतौ भुज
ङ्गभ्रमहेतौ नचकारणमज्ञानिरिक्तंत्वन्यथाभानात्मिकाऽविद्यैवसेत्यर्थः। किंचानिर्वचनीयोत्पत्तौ घटादिनामृदादेरिवब्रह्मणोपिवि
कारित्वापत्तिः। भ्रमविषयेप्यत्तुनविकारित्वं कामुककृतेः कान्ताविषयैः सत्ता किंतु मृतानुकिमनसिमेलीनाविलीनानुकिमितिविक
ल्पैः कान्तायाविकारित्वाभावात्। वस्तुतो मृदिघटादिविकारो भ्रमएवनतुकोपिपदार्थइतितदनन्यत्वमितिसूत्रेणोक्तम्। किंचप्रसि
द्धसामग्रीव्यतिरेकेपियथाज्ञानज्ञ्याशक्त्त्याशौरजताद्युत्पत्तिस्तथासामग्र्याविषयासत्त्वेपितदसन्निकर्षेपिज्ञानाङ्गीकारेपिनबाध
कम्। किंचानिर्वचनीयोत्पत्तौ तस्यैतस्यतादृशरजतत्वाद्याश्रयत्वेन तज्ज्ञानस्य भ्रमत्वानापत्तिः। तस्यतद्वृत्तिधर्मप्रकारकत्वाभा१

वात्। नच रजतत्वमेवानिर्वचनीयमाश्रयस्तच्छक्तिरेवेति न दोषः। त्वयापि जातेर्वारंवारमुत्पत्त्यनङ्गीकारात्। किंच जातेरिव तदाश्र
यत्वस्यापि तादृशस्यैकस्यासत्त्वेन पूर्वोक्तदोषतादवस्थ्यम्। तदुक्तं योगसूत्रे विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठमिति। विपर्यय
इति लक्ष्यं मिथ्याज्ञानमिति लक्षणं तद्विवरणम् तद्रूपेति तद्रूपप्रतिष्ठत्वाभाववत्। यज्ज्ञानप्रतिभासि रूपे रजतत्वादि तदाश्रयत्वा
भाववद्विशेष्यकमित्यर्थ इति मिथ्या॥ व्यासस्यापीदमेव च मिथ्याज्ञानमभिप्रेतं तेनान्यतल्लक्षणानुक्तेः। सांख्यदूषितानिर्व
चनीयख्यातेरपि तत्सूत्रानारूढत्वाच्च। तेन सांख्योक्तसदसत्ख्यातेरेव तदभिमतत्वं लक्ष्यते। किंच शक्तिरजतस्थलेऽधिष्ठान
ज्ञानेन तन्नाशो वाच्यः न च ज्ञानस्य वस्तुनाशकता दृष्टा अत एव गौतमादिभिरुत्पत्तिस्तत्र नोक्ता। अन्यथा घटादिवत्तत्राप्युत्पत्ति
मेव वदेयुः शुक्त्यादि समवायिकारणं चाकचिक्याद्यसमवायिकारणं दोषो निमित्तकारणमिति व
क्तुं शक्यत्वात्। अन्यथाख्यातिरित्येव चोक्तं तदीयैः अन्यथाख्यातिरित्यनेन प्रकारस्यान्यत्र सत्त्वं सूचितम्। तत्संबन्धोऽप्येव
मेव तदनुयोगिकत्वमप्येवमेवेति सूचितम्। संयोगसमवाययोः संबन्धत्वस्यानुयोगित्वादिभाननियतत्वात्। बुद्धिसद्धा तद्भ्र
मप्रकारत्वमेव मिथ्यात्वम्। रजतं पश्यामीत्यनुव्यवसायोऽपि दोषवशाच्चाक्षुषत्वांशे भ्रम एव। न च दोषस्य रजतज्ञानत्वत्वया
कार्यतावच्छेदकं वाच्यं तद्वरं रजतत्वमेव लाघवात्तथोचितमिति वाच्यम्। उत्पत्तिनाशकल्पनापेक्षया प्रमास्थलेऽक्लृप्तस्यतस्यै

ल·मं
३२

वतत्त्वौचित्यात्. अतएव ब्रह्मदृष्टिरुत्कर्षादित्यधिकरणे भाष्ये प्रत्येत्येव हि केवलं शुक्तिकां रजतमस्तीत्युक्तम्। मुग्धेऽर्धसंपत्तिरिति
सूत्रे भाष्येपि न हि स्वच्छः स्फटिकोऽलक्तकसंयोगादस्वस्थो भवति भ्रमत्वादस्वस्थत्वाभिमानमात्रस्येत्युक्तम्। नव्यावहारिकप्रा
तिभासिकयोः सदसद्विलक्षणत्वाविशेषेण भेदस्य वक्तुमशक्यत्वात्. विशेषदर्शनबाध्यत्वमपि तुल्यम्। तदुक्तं परमार्थसारे। ज्व
लनाज्जलोद्गतिमिरैर्विविधाकृतिरम्बरे यथा भाति. तद्वद्विष्णोः सृष्टिः स्वमायया द्वैतविस्तरा भातीति। अत्र भातीत्येवोक्तं न तूत्पद्यत इ
ति। आकाशे जलरेखावच्छिलायामङ्कुरवद् विविधाकृतेस्तत्र स्वरूपायोग्यत्वेनासंभवात्। स्वमायया वासनास्वरूपया। श्रीहर्षे
णाप्युक्तम्। परकीयरीत्यैतदुक्तमनिर्वचनीयत्वं विश्वस्य पर्यवस्यतीति। वस्तुतस्तु वयं सर्वप्रपञ्चसत्त्वासत्त्वव्यवस्थापननिवृत्ताः
स्वतःसिद्धे चिदात्मनि ब्रह्मतत्त्वे केवले भारमवलम्ब्य चरितार्थाः स्म एव मास्महे। ये तु स्वपरिकल्पितसाधकदूषणव्यवस्थया वि
चारमवतार्य तत्त्वं निर्णेतुमिच्छन्ति तान् प्रति ब्रूमो न साध्वी भवतो विचारव्यवस्था। भवत्कल्पितव्यवस्थयैव व्याहतत्वादिति।
सत्त्वासत्त्वव्यवस्थेति. सदन्यतरव्यवस्थेत्यर्थः। भारं प्रातिभासिकप्रपञ्चभारम्। अनिर्वचनीयत्वं निर्धार्य सत्त्वासत्त्वान्यत
रस्वरूपेणानिर्वचनीयत्वं न तु सदसद्विलक्षणत्वमिति तद्व्याख्यातारः॥ अतएव भागवते उक्तम्। ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चा
त्मनि। तद्विद्यादात्मनो मायां यथाभासो यथा तमः इति। यद्विना पदार्थमात्मन्यधिष्ठाने प्रतीयेत. सच्चात्मरूपं न प्रतीयेत तत्सत्यया

राम
३२

त्वौ

प्रत्ययस्वरूपमात्र[illegible]लो मायाऽपि[illegible]न्तु। यथा आभासो हि चन्द्रादेः। यस्याश्च तमोराहुग्रहमण्डले सत्त्वेऽपि न प्रतीयत इत्यर्थः। असदर्थप्र॰
काशनशैव मायेत्वाद्द्वेधमेव युक्तम्। यदुक्तं बृहन्नारदीये। नासद्रूपा न सद्रूपा माया नैवोभयात्मिका। अनिर्वाच्या ततो ज्ञेया मिथ्या
भूता सनातनीति। तस्या ऽर्थः। व्यवहारकाले सत्त्वेन प्रतीतेर्न केवलमसद्रूपा प्रतिक्षणं परिणामितया प्रतीतेर्बाधदर्शनाद्वि
शेषदर्शनबाध्यत्वाच्च न केवलं वास्तवसद्रूपा। अतएव वास्तवोभयरूपापि न विरोधाच्च। अतएवानिर्वाच्या सत्त्वेनासत्त्वेनेति निर्धा
र्यं वक्तुमशक्या तर्हि किमुभयविलक्षणा नेत्याह मिथ्याभूता प्रतिभासमात्रविषयत्वात् सनातनी भ्रमपरंपराजनकपरंपराक
वासनारूपेणेति तस्मादारोपितं सत्त्वं परमार्थतस्त्वसत्त्वमित्येव युक्तम्। तदुक्तं यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकमिति। ई
श्वरस्यात्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये इति भाष्यस्याप्ययमेवार्थः। अविद्यात्मवासनारूपा।
प्रकृतेस्तावत्त्वं हि प्रतिषेधतीति सूत्रे अथात आदेशो नेति नेतीति श्रुतिव्याख्यावसरे पूर्वप्रतिषेधो भूतराशिं प्रतिषेध इति उत्तरो वासनाराशि
मिति भाष्योक्तेः। ईश्वरस्यात्मभूत इत्यनेनारोपितसत्त्वेत्युक्तम्। अविद्याकल्पितेत्यनेनासत्त्वमुक्तम्। एवमेवाविद्याकल्पितेन नामरूपलक्ष
णेन भेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदं पारमार्थिकेन रूपेण सर्वव्यवहारा
तीतमिति भाष्यमपि व्याख्येयम्। तत्राविद्यापूर्वतनसंस्काररूपा। व्याकृतं स्थूलमव्याकृतं तज्जन्यसंस्कारः। अस्थूलं तदन्त॰

र्प्रतिपत्तौ रंहतिसंपरिष्वक्त इतिसूत्रे भाष्यं जीवो मुख्यप्राणसचिवः सेन्द्रियः समनस्को विद्याकर्मपूर्वप्रज्ञापरिग्रहः पूर्वदेहं वि
धाय देहान्तरं प्रतिपद्यत इति तत्र पूर्वप्रज्ञाशब्देन प्रतिपत्तव्यदेहविषय उद्बुद्ध संस्कारः। वक्ष्यति तत्रैव कर्मोपस्थितप्रतिपत्त
व्यदेहविषयभावनादीर्घीभावमात्रं जलूकयोपमीयत इति कर्मोपस्थापितः स्वकृतो द्बुद्धसंस्कारेण बुद्धिविषयः कृतमित्यर्थः
। एवमेव एवंजातीयकमन्यदपि भाष्यव्याख्येयम्। कौर्मेऽपि विश्वं पृथ्व्यादि चित्तस्थं न बहिः क्वचन स्वप्नभ्रममदाद्येषु सर्वैरेवा
नुभूयत इति। अत्र न कदाचनेत्युक्त्या व्यवहारदशायामपि तथात्वमेवोक्तं चित्तशब्देन ईश्वरोपाधिरपि नेह नानास्ति किंचने
त्याद्याः श्रुतिरपि बहिः सर्वप्रकारसत्तामनारोपितां निषेधति ॥ अत एव वाचस्पतिमिश्रा अपि अध्यासभाष्यव्याख्यायामाहुः।
मृगतृष्णाजलादि न सत् नासत् नापि सदसत् विरोधात् इत्यनिर्वाच्यमेव मरीचिषु तोयमास्थेयम्। अध्यस्तं च परमार्थतोयमिव
भासते अत एव पूर्वदृष्टं तत्त्वतस्तु न तोयेन च पूर्वदृष्टं किंत्वनिर्वाच्यमनृतं देहादिप्रपञ्चोऽप्यनिर्वाच्यो पूर्वोऽपि मिथ्या प्रत्ययो
पदर्शित एव चिदात्मन्यध्यस्यते चिदात्मा तु श्रुत्यादिगोचरः सत्त्वेनैव निर्वाच्य इति। अस्यार्थः। न सत् बाधयोगात् नासत् अस
तश्चाक्षुषाद्यनुभवविषयत्वाभावात् नापि सदसत् अनारोपितोभयात्मकम्। अनारोपितोभयरूपत्वस्य विरुद्धत्वात् अ
निर्वाच्यमेव आरोपितस्य ... त्वादन्यतरधर्मेण निर्धार्य वक्तुमशक्यं तदाहानृतमनिर्वाच्यमिति। अनृतमसत् अनिर्वाच्यस्त्व

राम-
३५

शुक्तरीत्यानृतत्वेनैवनिर्धार्य[illegible]क्रमशक्यत्वात् यदध्यस्यते तदनृतमनिर्वाच्यमित्यर्थः। अपूर्वः ज्ञानात्पूर्वमविद्यमानः नदाहमि
थ्याप्रत्ययोपद[illegible]तिएवेति[illegible]थ्याप्रत्ययशब्देन तज्जन्यः संस्कारः। अतएवाध्यस्य तद्दृत्वे वोक्तेन तूत्पद्यते इति। अध्यस्यतइ
त्यस्येत्युच्यत इति शेषः। [illegible]पदर्शनस्यैवाध्यासत्वात्। निर्धार्यवाच्यत्वाभावएवानिर्वाच्यत्वमिति ध्वनयन्नाह। सत्वेनैवनिर्वाच्य
इतीनि। सदसद्विलक्षणत्वस्यानिर्वाच्यत्वपदार्थत्वे तदुत्पत्त्यङ्गीकारे चापूर्वइत्युक्तस्य संगतिः। अत्रैवकाराधिक्यंच। एवंचासत
एवारोपितसत्त्ववतः पुरोवर्त्तिनिकल्पनात्संनिकर्षोपिताहृशः सूपपादः। सन्निकर्षादिनाचित्तादिदोषवशाज्ज्ञानमित्युपपादितम्।
एवमध्यासोपिअनिर्वाच्यएव। तदुक्तंतैरेवतं केचिदन्यत्रान्यधर्माध्यास इतिभाष्यावतारणे सचायमध्यासो ऽनिर्वचनीयः सर्वेषा
मेवसंमत इति। नानिर्वचनीयस्य ख्यातिरितिसांख्योक्तं ततखण्डनं तु सदसद्विलक्षणमुत्पद्यते निर्वचनीयमितिबाह्यैकदे
शिमतसिद्धस्यनत्वनिर्वचनीयवादस्य। इदमेवानिर्वचनीयत्वं सदसत्ख्यातिशब्देन तेनोक्तमितिबोध्यम्। परमार्थसारे ऽपि
सत्यमिवजगदसत्यं मूलनिकृन्तेरिदं कृतयेन। तंप्रणिपत्योपेन्द्रं वक्ष्ये परमार्थसारमिदमिति। प्राणाद्यनन्तभेदैरात्मानं संवित
त्ये[illegible]जालमिवसंहरति वासुदेवः स्वविभूत्याक्रीडमान इवेतिच। कृतमित्यस्य दर्शितमित्यर्थः। संवितत्ये त्यस्य दर्शयित्वे
त्यर्थः। अन्यथात्मनोविकारित्वापत्तिः। स्वविभूत्यावासनारूपयासत्यमिवेतीवेनतस्यारोपितत्वं स्पष्टमेवोक्तम्। यद्वापूर्वे

पूर्ववासनावशात्सत्त्वेनापिप्रतीतेः। व्यवहारकालमात्रेतत्प्रतीतेः सत्यमिवेत्युक्तम्। एतेनासतोभानेबीजमतप्रवेशइत्यपास्तम्। तेनतत्रारोपितत्वसत्त्वस्याप्यनङ्गीकारात्। आत्मनस्तेनानित्यत्वाङ्गीकाराच्च। परमार्थसारेपि-अमलःसकलाद्विभातस्यैतन्यात्मा एवबह्मापी·सर्वविकल्पनहीनःशुद्धोबुद्धोऽजरोमरःशान्तइत्याद्यस्वस्वरूपमुक्तम्। श्रुतिषुचश्रुतमेवतथोक्तम्·विकल्पनेनामरूपेइदमुपलक्षणम्। उत्पत्तिविनाशबहिर्दृष्ट्यादिकमपिसत्यत्वेनारोपितमीश्वरेण· तस्यसत्यसंकल्पत्वात्सृष्ट्याद्यकालेचैषसंकल्पस्तस्य। यद्वातत्तत्सामग्रीभ्रमस्तत्तद्विषयभ्रमेकारणमितितत्कृतकार्यकारणभावस्यतद्विषयेनादिवासनावशादारोपितावेवोत्पत्तिनाशावारोपितत्वमपलप्यकाणादसांख्याभ्यासुक्तौ· तत्रसांख्यस्यापिसूक्ष्मतन्मात्रेभ्यःपरमाणवादिक्रमेणैवस्थूलभूतोत्पत्तिरभिप्रेतेति योगवृत्तौस्पष्टंनिरूपितम्। तस्माद्भ्रमरूपास्थूलाऽविद्यावासनारूपाचाव्यक्तपदवाच्यासूक्ष्माःविद्याव्यवहारकालेस्थूलाविद्यायाःसाकारणमितितस्याएवकारणत्वेननिर्देशोव्यक्तम्कारणमित्यादौ। एतत्स्पष्टोतज्जन्मानुपलभ्मात्तस्यनित्यत्वोक्तिर्नेत्ता। उपनिषद्व्याख्येऽजामितिश्रुतौअजामित्यस्ययौगिकत्वेनजन्माभावपरतयाव्याख्यानमप्येवमेवनेयम्। संस्काराणामपित्रिगुणात्मकत्वात्लोहितशुक्लकृष्णागुणत्वंतस्याःसमूहाभिप्रायेणचैकवचनंबोध्यम्। वासनारूपैवसमूलप्रकृतिरित्युच्यते। अनिर्वचनीयोत्र्यचिन्नासिभिन्नापिसम्मानाधिकरण्यावच्छिन्नप्रतिकान्यात्यन्ताभावस्यप्रतियोगित्वरूपंमि

ध्यात्वं वदद्भिः स्वीकृतमेव वस्तुनोऽसत्त्वम्। अन्यथाऽभावपदे विरोधार्थत्वान्नञः प्रतियोगिसामानाधिकरण्यं तस्य वक्तुमशक्यम्।
प्रतियोग्यसामानाधिकरण्यस्यैव तत्र विरोधपदार्थत्वात्। ममतु स्वप्रतिभाससमानाधिकरणेत्याद्युक्तमेव भ्रमविषयत्वं मिथ्या
त्वम्। ध्वनितं चेदं देवताधिकरणे कल्पतरुणा भ्रमात्संस्कारतोऽप्यन्या मण्डूकमृद्वदाहृतेः। अविद्यानादिभावात्मा मता वाचस्पते
रिहेत्यनेन। अत्र वाचस्पतेर्मतेत्यनेन सूत्रभाष्यकृतोर्भ्रमतत्संस्काररूपैवाविद्येति मतं सूचितम्। इह देवताधिकरणेऽनेन वाच
स्पतेरप्यन्यत्र तत्पक्षाभिनिवेशः सूचितः। वस्तुतो यथा मण्डूकामृदो निःसरन्तीत्युदाहरणमपि वासनासमूहस्याविद्यात्वे

न समूहादेकैकस्य निःसरणेनोपपन्नम्। सनत्सुजातीयभाष्ये भगवत्पादैरप्युक्तं मोहो मृत्युरिति पद्ये मोहो मिथ्याज्ञानमना
त्मन्यात्माभिमानः। अनेनाग्रहणान्यथाग्रहणात्मिकाऽविद्या सूचितेति। अग्रहणमात्मस्वरूपाग्रहणं तन्मूलकमिथ्याज्ञाना
त्मिकेत्यर्थः। द्युभ्वाद्यायतनाधिकरणे च देहादिष्वनात्मसु अहमस्मीत्यात्मबुद्धिरविद्येति भाष्ये उक्तम्। अध्यासभाष्येऽपि विष
यविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरि
त्यतस्तयोरध्यासो मिथ्येति भवितुं युक्तमित्यनेन मिथ्याभूतेनालीकेनाध्यासेन सकललोकशास्त्रव्यवहारानुपपत्तिरिति पूर्वपक्षं
कृत्वा तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यन्तविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननि

ल॰मं॰
३५

मित्तः सत्यानृते मिथुनी कृत्याहमिदं ममेदमिति नैसर्गिकोयं लोकव्यवहार इति सिद्धान्तितम्। तस्यैव चाध्यासस्य ब्रह्माणापाध्या
त्मशास्त्रमिति तदर्थः। एतच्चाग्रे भाष्ये एवोपपादितम्। अध्यस्येत्यस्यैव विवरणं सत्यानृते मिथुनी कृत्येति। सत्यं ब्रह्म नकृतम
नृतमसत् एतत्पदार्थमात्रे तत्र सत्यं विशेष्यमनृतमुपाधयो विशेषणम्। ऐतरेयोपनिषदि सर्वाण्येवैतानि प्रज्ञानस्य नामधेया
नि भवन्ति एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि चेत्यादिना यच्च स्थावरमित्यन्तेन स्पष्टमेवैतदुक्तम्। एष प्रज्ञानात्मे
ति व्याख्यातम्। विशेष्यांशस्यैव च नामधेयं संभवति न हि घट इति घटत्वस्य नामेति कश्चिदभ्युपैति। श्रुत्यन्तरेऽपि भोक्ता भोग्यं प्रे(
रितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतदित्यत्र भोग्यजडवर्गस्य ब्रह्मत्वमुक्तं तच्चोक्तरीत्यैव तदनन्यत्वमिति सूत्रेऽपि भाष्य उ
क्तम्। आक्षात्मावगतेरन्याहृतः सर्वो लोकव्यवहारः सत्यानृतविषय इति इदं च मिथ्याज्ञाननिमित्त इति प्रतीके मिथ्याज्ञानम(
ध्यास इति व्याचख्याणैर्लोकव्यवहार इति प्रतीके लोकानां व्यवहारः स चायमहं ममेदमिति च व्याचक्षाणैर्वाचस्पतिमिश्रैः स्पष्टी
कृतम्। सर्वानर्थमूलत्वादिदं ममाहमिदमित्येव व्यवहारः साक्षादुक्तः स च व्यवहारमात्रस्योपलक्षणम्। नैसर्गिक इत्यनेन पू
र्वपूर्वभ्रमजन्य उत्तरोत्तरः संस्कारस्ततश्चोत्तरोत्तरभ्रम इति सूचितम्। तत्र देहादावहमित्यध्यासः शुद्ध विषय एव जडचेतनयो
र्विषयविषयिणोरन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्येति भाष्योक्तेः। न चाध्यस्यमानस्य मिथ्यात्वेन ब्रह्मणोऽपि मिथ्यात्वाप

राम॰
३५

त्तिः। अध्यासविषयस्य मिथ्यात्वमित्येव नियमात्। सच क्वचिदध्यस्यमानस्य कचिदधिष्ठानस्य तत्त्वेनोपपन्नः। य॑।
मिथ्यासंसृष्टात्माध्यास इति कैश्चिदुक्तं तन्न। उक्तभाष्यास्वारस्यात्। यत्तु अध्यासः किंनिमित्तकस्तत्राह मिथ्याज्ञाननि
मूलकारणाविद्यारूपभावपदार्थनिमित्तक इत्यर्थः। तच्च लोकव्यवहार इत्यस्य विशेषणम्। लोकातेमनुष्योहमिति
तिज्ञानोपसर्जनोऽर्थाध्यासः तद्विषयो व्यवहारः अध्यस्यमानार्थविषयो व्यवहार इति ज्ञानाध्यासोऽत्र व्यवहारः का
ध्यानिमित्तक इति साचाविद्यासंस्कारकालकर्मादिरूपेण परिणताध्यासनिमित्तमिति। तन्न। त्रयाणामध्यध्यासाहृष्ट
ध्यस्य मिथुनीकृत्येतिक्त्वाप्रत्ययानुपपत्तेः। नच तयोः भेदे पौर्वापर्येपि विशेषणभेदेन वस्तुभेदं परिकल्प्य अभू
क्रमेण पौर्वापर्यं च परिकल्प्य तदुपपत्तिरिति वाच्यम्। भेदकविशेषणानुपलम्भात्। प्रतिपत्तिक्रमानुभवाद्दृष्टेन
पहारकत्वेन लोकव्यवहारपदयोर्यथा कथंचित्त्वाभिमतयोगेनाध्यासपरतया व्याख्यानस्यानौचित्याच्च। तोः [illegible]
नाभाष्यानुपपत्तेरभावाच्च। किंच ज्ञानाध्यासो यथा प्रतिमादौ देवताद्यध्यासो यथा वा सन्निकृष्टे घटस्तदुपबृंहणेन सू
मिलौ विषयस्यासत्त्वेन योऽध्यास इति वदन्ति नव्याः। तर्हि सर्वत्र तथैवास्तु किमनेन द्वैविध्येन। किंच [illegible] पर्यमनादिकमि
ति [illegible]रादिरूपेण परिणामद्वाराकारणत्वेन लाघवात्। क्रमसंस्कारादृष्टैरेवोपपत्तौ तत्कल्पने मानाभावोक्तेः। किंच ब्रह्मा

ल·मं· ३६

स्य

तु अध्यस्यैनेनानन्तर्यलाभेपितस्य निमित्तत्वालाभात् तदुक्तिः। भ्रमरूपाध्यासेन कथं व्यवहारः। सत्यब्रह्मणापाध्या
तदुक्तिः। मिथ्याज्ञानविषयेण रज्जुसर्पादिना भयपलायनादिव्यवहारवत् सर्वोपि व्यवहारस्तत्। सत्यंब्रह्म· नन्वेतम
च सर्वसंमताध्यासविषयकोयमध्यासो नाम स्मृतिरूपः परत्र पूर्वदृष्टावभास इति प्रश्नोत्तरतानिरूपणस्य नामधेया
प्रश्नोत्तरानुपलम्भेन सा न भाष्यसंमता। पूर्वदृष्टस्य परस्यावभास इत्यर्थः। परत्रेत्युक्तेः परस्येति लब्धम्। अवसन्नात्वे
वभासः। उत्तरकालिकबाधेन तस्यावसादात्· पूर्वदृष्टत्वं च संस्कारद्वारोपयोगितच्च जन्मान्तरीयमपि तदाह योग्यं प्रे(
ति। स्मृतिसदृश इत्यर्थः। संस्कारजन्यत्वेन च तत्सादृश्यं न तु स्मृतिरेव पूर्वानुभूतत्वस्ततत्तानुल्लेखात्। एतच्चाध्येउ
ते। अनेन च संस्कारोध्यासनिमित्तमित्युक्तमेवेति तदाकाङ्क्षाभावेन तदंशेपि प्रश्नोत्तराभावः। अथैवाध्यासज्ञानम(
ध्यानकाभिति सूचयितुमेवतमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्वत इत्युक्तम्। भावरूपायाः कारणाद्यी
तिरिक्ताया भाष्यसंमतत्वे ऽध्यासमपीति ब्रूयात्· तमेतमेवंलक्षणमित्यक्षरस्वारस्येनात्राह ममेत्यध्यास एवाविद्यापू राम·
वः सर्वमिति विद्यायां तस्यैव विरोधित्वात् प्रागद्वेषमोहादिवासनास्तु वासनापदेनैव वाच्याः। मायात्वं तु साधारणो
त्राप्यविद्यापदप्रयोगस्तु अध्यासत्वसामान्याश्रयेण इति लभ्यते। अत एवोपपद्यते चोपलभ्यते चेति सूत्रे भाष्ये त्वाप ३५

२५

श्वरस्य वैषम्यकारणत्वमित्यर्थः। नचाविद्या केवला वैषम्यकारणम्। तस्या एकरूपत्वात्। रागद्वेषवासनाक्षिप्तमु।
नुतस्या ईश्वरस्यापि तदपेक्षत्वाद्वैषम्यहेतुत्वमुपपन्नमिति। एकरूपत्वादित्यस्याहंममेत्यध्यासरूपाविद्यायाः सर्वेषु
पत्वादित्यर्थः। तत्तत्प्राणिकर्मवशाद्बीजाङ्कुरन्यायेनानादिपूर्वपूर्ववासनयैव घटादिभ्रमरूपां सृष्टिं सा करोतीति बोध्यं
च तत्तु समन्वयादिति सूत्रे साध्यत्वे मोक्षोऽभ्युपगम्येत अनित्य एव स्यादिति भाष्ये उक्तम्· तत्त्वानित्यत्वं नाशकारणेति· न का
याऽविद्याया नाश्यत्ववज्जन्यस्यापि मोक्षस्याविनाशित्वे किं बाधकं जन्यत्वनाश्यत्वयोः परस्परव्यभिचारे यथा प्रतिज्ञाद्दृष्टा
जन्या। विद्यानाश्या चेत्युक्तमेव। योगसूत्रे प्युक्तम्· अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः [illegible]रणं कार्यभू
एतद्विलक्षणा विद्या नु केवलस्यापीदमेव सम्मतमिति लक्ष्यते। अत एव पञ्चवृत्तिर्मनो वद्युपदिश्यते तद्वृत्तिरूपा एतत्स्पष्टेन
मनुमतं भवतीति न्यायेन योगशास्त्रप्रसिद्धाः प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपा मनसः पञ्चवृत्तयः तस्मादव्यक्त [illegible]
उक्तम्· परमार्थसारेऽपि· रज्ज्वां नास्ति भुजंगः सर्पभयं भवति हेतुना केन। तद्वदद्वैतविकल्पभ्रान्तिरविद्यास्तदुपबृंहणेन सू
दन्यकारं यदनात्मन्यात्मता भ्रान्त्या न विदन्ति वासुदेवं सर्वात्मानं जना मूढा इति। [illegible]द्भ्रान्तिरूपम्· उरे पर्यमनादिकमि
ति अविद्यापदव्युत्पत्तिर्दर्शिता। एवं च सिद्धं भ्रमस्तत्संस्काररूपा चाविद्येति सा च जन्यैवेति नैकविज्ञानेत्युक्तेः। किंच ब्रह्मा

सूत्रे चोक्तम्। प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणोऽविद्यया सर्वशक्तियोगः सर्वज्ञं सर्वशक्तियोगं महामायं च तद्ब्रह्मेत्यन्यत्रोक्तम्।
अत्राविद्ययेत्यस्य पूर्वैस्तद्विधमिथ्याज्ञानजन्यवासनयेत्यर्थः। शक्तिसमूह एव च महामायेति बोध्यम्। एतेनाविद्याऽजन्या कश्चि
द्भावपदार्थो वासनाश्रय इत्यपास्तम्। अतिरिक्ततत्कल्पने मानाभावात्। अत एव प्रपञ्चस्यैककारणकत्वप्रवादनिर्वाहः। स्व
जन्यातिरिक्तसहकार्यनपेक्षत्वात्। यत्तु प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति सूत्रभाष्ये च ब्रह्मैवोपादानकारणं निमित्तका
रणं चेत्युक्तम्। तस्य स्वसमकक्षनिमित्तकारणाभावे तात्पर्यम्। इतोऽपि अविद्यायां जन्यत्वमावश्यकम्। अन्यथा प्रतिज्ञादृष्टा
न्तोपरोधः स्यादेवेति बोध्यम्। अत एव विष्णुपुराणे प्रजापतिपतिं विष्णुमनन्तमपराजितं प्रधानपुंसोरजयोः कारणं कार्यभू
तयोरिति स्मर्यते। अजयोरिति रूपकं स्वातन्त्र्यनिरासाय तद्ध्वनयनार्थं च कारणं कार्यभूतयोरित्युक्तम्। यद्वा एतत्स्पष्टेन
ज्जन्मानुपलम्भादजत्वं पूर्वकल्पान्ते जन्यत्वमादाय कार्यभूतयोरित्युक्तम्। यत्तत्सूक्ष्ममविज्ञेयमिति प्रकृत्य तस्माद्व्यक्त
मुत्पन्नं त्रिगुणं द्विजसत्तमेति। अव्यक्ते पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते इति च भाष्योदाहृतस्मृत्यन्तरविरोधश्च। एतदुपबृंहणेन सू
त्रस्वरसेन चोक्तजातीयश्रुतीनामनुक्तव्याख्यैवोचिता। तदुक्तं चरके पतञ्जलिना। आदिर्नास्त्यात्मनः क्षेत्रपारंपर्यमनादिकमि
ति। प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव चेति षट्के गीतायां वासनासमूहरूपाविद्याया अव्यक्तशब्देन क्षेत्रत्वोक्तेः। किंच ब्रह्मा

गडपुराणे तस्या ब्रह्मणि लय उक्तः। स्थूलं विलाप्य करणे करणं निदाने तत्कारणं करणकारणवर्जिते च। इत्थं विलाप्य यमिनः प्रवि
शान्ति यत्र तं त्वां हरिं विमलबोधघनं नमामीति। करणं महदादि निदानं प्रकृतिः। तत्करणं प्रकृतिरूपकारणम्। करणकारणव-
र्जिते ब्रह्मणि। अनेनापि तदतिरिक्तस्य करणकारणसाहित्यं सूचितम्। विलाप्येत्यनेन समूलमुन्मूलनमुक्तं न तु प्रलय इवावि
भागेनावस्थानम्। अत्र ब्रह्मणि लयोक्त्या तस्य तदुपादानत्वमुक्तम्। उपादानकारणे एव लयस्य यतो वा इमानि भूतानि जा
यन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति श्रुत्या बोधनात्। यस्य हि यत उत्पत्तिस्तस्य तत्र लयो न्याय्यो मृदीव श
रावस्य न च मनसो वा उत्पद्यत इति शांकरभाष्याच्च। किंचानुत्पत्तिकत्वे तस्यालाभानापत्तिः। तदुक्तं न्यायभाष्ये वात्स्यायने
न। न चानुत्पत्तिधर्मकं किंचिद्व्ययधर्मकं प्रतिज्ञातुं शक्यमिति। प्रागभावस्यापि न नाशः। उत्पत्त्यनन्तरं तत्प्राक्कालाभावेन त
द्व्यवहाराभावोपपत्तेः। एवं जीवानामप्युपाधिवैशिष्ट्येन जन्यत्वमावश्यकम्। अत एव श्रुतौ लोहस्याग्नेर्विस्फुलिङ्गा इव जीवा
इत्युक्तम्। परमार्थसारेऽपि। एतस्मात्तु स्वेनज्ञाद् ब्रह्मणः सञ्जातये जाताः लोहस्थादिव दहनात्समन्ततो विस्फुलिङ्गकणा इत्यु
क्तम्। स्वेनोत्पत्तिरेव न तदुत्पत्तिरिति तद्व्याख्यातारः। विशेषांशमादाय तेषां नित्यत्वोक्तिरपि। किं बहुना घटादेरप्येवमेव ज
न्यत्वेन तत्तदाकारादिविशिष्टब्रह्मण एव घटादित्वात्। तदुक्तं परमार्थसारे। यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वे

षुक्तइत्यस्मकलोपाधिष्ववस्थितो भाति परमात्मेति। भातिविशेष्यतयेत्यर्थः। अतएवब्रह्मव्यं नित्यमिति महाभाष्येउक्तमित्युपरिष्टाद्व
क्ष्यामः। उपाधिसन्निवेशादिशब्देभ्यब्रह्मैव। पूर्वपूर्ववासनावशात्परमात्मनएवोपाध्यादिरूपेणतद्वैशिष्ट्येनभानात्। अतएव
सर्वशब्दानांब्रह्मैववाच्यंवाचकंचेतिहरिणासिद्धान्तितंसंगच्छते। अतएवहिरण्यगर्भस्यकार्यब्रह्मेतिव्यवहारः। तथाचसा
मीप्याच्चुतद्व्यपदेशइतिसूत्रेब्रह्मसामीप्यात्परब्रह्मण्यपिब्रह्मशब्दः कार्यमेवहि ब्रह्मविशुद्धोपाधिसंबद्धं कांचित्कैश्चिद्धिका
रधर्मैर्मनोमयत्वादिभिरूपासनायोपदिश्यमानमपरमितिस्थितिरितिभाष्येउक्तम्। अविद्यायाजन्यत्वादेवसर्वंखल्विदंब्रह्मत
ज्जलानितिश्रुतिर्हिरण्यगर्भोब्रह्मातिरिक्तसर्वत्वावच्छिन्नविषयेएकरूपाभवति। विष्णुपुराणेपि॰ ज्ञानमेवपरंब्रह्मज्ञानंबन्धाय
चेष्यते। ज्ञानात्मकमिदंविश्वंनज्ञानाद्विद्यतेपरम्। विद्याविद्येचमैत्रेयज्ञानमेवोपधारयेति। निरुपाधिब्रह्मैवविद्यासोपाधित
देवाविद्येतिनदर्थः। तदुक्तमाचार्यैः द्विरूपंहिब्रह्मावगम्यतेनामरूपविकारभेदोपाधिविशिष्टंतद्विपरीतंचसर्वोपाधिविवर्जि
तमिति। अत्रावगम्यतेइत्यक्तत्याव्यवहारमात्रेब्रह्मणोद्विरूपत्वमुक्तम्। अन्त्येतुयोगिभिः समाधाववगम्यतइतिबोध्यम्।
परमार्थसारेपि। विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः। व्यवहारस्यस्यात्मनएतेऽवस्थाविशेषाः स्युरिति। यद्यपि
विज्ञानंब्रह्मैवतथापिनामवैशिष्ट्येनावस्थात्वमुक्तम्। विपरीतंज्ञानंमायापिविज्ञानमत्रएतेविज्ञानादयआत्मनोभ्रमरूपाः

प्रतिभाससमात्रविषयाअनवस्थाइत्यर्थः।अनेनसर्वोपाधीनांतद्विशेष्याणांचब्रह्मरूपत्वमुक्तम्।तदप्युक्तंतत्रैव·रज्वांनास्तिभुजंगः
सर्पभयंभवतिकुतोमुनाकेन।तद्वद्द्वैतविकल्पभ्रान्तिरविद्यानसत्यमिदमितितदुत्तरार्धस्य।इदंविज्ञानादि·अविद्यावासनारूपावि
द्यामूलके वासनारूपस्थूलसूक्ष्मोपाधिविशिष्टेनापिब्रह्मभानंमननादिपरिपाकवतामस्त्येव।अविद्यासाम्याध्यासिकसंबन्धेनपर
मात्मैवाश्रयस्तद्व्यतिरिक्ताविद्यायाइव।तदप्युक्तंतत्रैव·त्रिगुणाचैतन्यात्मनिइतिपूर्वोक्तार्धया।अत्राधिष्ठानत्वमेवतद्विशेष्य
त्वरूपविवर्तोपादानत्वम्।अतएवरज्जौभुजंगोजातइत्यप्रत्ययः।रज्जौभुजंगभ्रमोजातइत्येवचप्रत्ययः।अनादिनिधनंब्रह्मे
त्याद्यश्लोकेहरिग्रन्थेपिस्पष्टमेतत्·तत्त्वादप्रच्युतस्यवस्तुनोभेदानुकारेणासत्याविभक्तान्यरूपोपग्राहिताविवर्त्तः स्वप्नविष
यप्रतिभासवदित्यादिना।तत्त्वात् स्वस्वरूपादसत्यंवस्तुबहिरसत्त्वात्·अविभक्तमधिष्ठानेनअन्यद्वैधर्म्योपलम्भात् तादृश
रूपोपग्राहितातद्रूपप्रकारकज्ञानविशेष्यतानुदाहृस्वप्नविषयेतीतितद्व्याख्यातारः।पयसोदधितुनविवर्तः।तत्त्वात्प्रच्युतेः।
स्वर्णादेःकुण्डलादितुविवर्तएव।तदुक्तंपरमार्थसारे·यद्वद्देहेः सयथामृदेवपार्थिवविकारजातंपश्य।तद्वत्स्थावरजङ्गममद्वैतं
द्वैतंचज्ञालीति।अवयवातिरिक्तोवयवीयथाः सन्मृत्तिकाख्यथाः सन्तोभान्तितथानामरूपवत्त्वमसदेवभातीतितदर्थः।द्वै
तशब्देनचद्वाभ्यांप्रकाराभ्यामितंज्ञातंद्वीतंतस्यभावोद्वैतमितिव्युत्पत्त्यानामरूपेउच्यतेतद्रहितंचाद्वैतशब्देन।एवंचद्वैतश

ब्देन प्रपञ्चस्योक्तिरेव नाम्नः प्रकारत्वेमानमित्यपि बोध्यम्। श्रुतिरपि विकारो नामधेयं मृत्तिकेत्येव सत्यमिति नाममात्रं व्यवहारमा
त्रं न तु तन्मात्रान्तरेऽपि वस्तुत्वमस्तीति तदर्थः। चेतनसन्निधानमात्रेण देहेन्द्रियमनःसु क्रियादर्शनात् तस्य प्रेरकत्वाद्यारोपितमेव ज
नकत्वादि च। तदुक्तं भाष्ये· जीवेश्वरयोरैक्यात्स्वतस्त्वं प्रवर्तकत्वमनुपपन्नं न अविद्याप्रत्युपस्थापितनामरूपरूपमायावशेन त
दुपपत्तेः॥ अविद्यासंस्काररूपा। माया स्थूलरूपा। न च सन्निधिमात्रेण प्रवर्तकत्वे सन्निधिनित्यत्वात्प्रवृत्तिनित्यत्वप्रसङ्ग इति
वाच्यम्। सन्निधिनित्यत्वेऽपि मायिकत्वेन परिहारादिति नन्तुदृष्टान्तभावादिति सूत्रेऽपि भाष्ये उक्तम्। यथा स्वयं प्रसारितमायया
मायावी कदापि न संस्पृश्यतेऽवस्तुत्वादेवं परमात्मापि न संसारमायया संस्पृश्यते मायामात्रं ह्येतद्यत्तत्र मात्मनोः तस्यास्तया
त्मनाः वभासमाने रज्ज्वादौ वसर्पादिभावेनेति। अत्रावस्थात्रयेत्युपलक्षणम्। अनेन हि सर्वस्य जनकत्वादेरवभास एव न वस्तु किं
चिदस्तीति स्पष्टमेवोक्तम्। अनादिवासनावशाद्भ्रमविषयमेव तद्द्वयवीक्षेत्यादिश्रुतयोऽनुवदन्ति। यतो वेतिश्रुत्या सर्वस्य जन
कत्वपालकत्वलयस्थानत्वैस्तादृशैरेव ब्रह्मणस्तटस्थलक्षणं बोध्यते। काल त्रयस्थत्वापनिषद्वेनेन तद्बोधितकालत्रयाबाध्य
त्वरूपं स्वरूपलक्षणमपि बोध्यते। सत्यं ज्ञानमानन्दमित्यादिश्रुतयोऽपि शुद्धचित्तं प्रति नेह नानास्तीत्यादिश्रुतिसहकारेण
धर्मत्यागेनाद्वैतं शुद्धं ब्रह्म बोधयन्ति। कणादादयोऽपि मायिकत्वेन मिथ्याभूतत्वेन ब्रह्मरूपत्वेन चास्वज्ञातस्य प्रपञ्चस्य बोध

नीयशिष्याधिकारानुसारेणमायिकत्वाद्युपलभ्यब्रह्मरूपत्वेनज्ञातपरमार्थवादिभ्यः सृष्टिंसमर्थयद्भ्यो वादीनांपदार्थत्वंचातीन्द्रि
यदृष्ट्याज्ञात्वोक्तवन्तस्तत्रतदुक्तपदार्थानांशुष्कतर्कबलेनान्यथाकरणंतेषांखण्डनंचायुक्तमेव। असत्कल्पभासमानेष्वर्थेषु
ऋष्यनुसारेणैवकल्पनाया औचित्यात्। तदुक्तंपरमार्थसारे यद्यत्सिद्धान्तागमतर्कादिषुभ्रमन्तिरागान्धाः। अनुमोदामस्तत्त
त्तेषांसर्वात्मवादधियेति। सिद्धान्तप्रतिपादकेषुपाञ्चरात्राद्यागमादिषुभ्रमन्ति। अयमेवसिद्धान्तःसमीचीनइतिभ्रमन्तिचित्त
स्वास्थ्यंचनलभन्तेतत्तत्तेषांमतंसर्वमात्मेतिवादेयाधीस्तयानुमोदामइतितदर्थः। नचैवंरीत्यासर्वस्यचेतनत्वेसर्वत्रचेतन
कार्यंकुतोनेतिवाच्यम्। चेतनसन्निधानेनतत्तत्कार्यजननीयेसेन्द्रियद्रव्यस्यकारणत्वात्। तदुक्तंचरकेपतञ्जलिना। से
न्द्रियंचेतनंद्रव्यंनिरिन्द्रियमचेतनमिति। अत्रग्रन्थेअग्रेपश्चात्क्वचित्साधुनिकग्रन्थानुसारेणास्मिल्लिखितमितिनपूर्वापर
विरोधोऽत्रेत्यलंप्रसक्तानुप्रसक्तया॥ प्रकृतमनुसरामः। चित्तस्यविषयाकारपरिणामरूपावृत्तिश्चेन्द्रियेणग्रहैव। अतएव
रसनेन्द्रियगतपित्तान्वयेनगुडःकटुरितिनयनगतपित्तान्वयेनचशङ्खःपीतइत्याद्युपपद्यते। साचग्रमप्रमोभयरूपापुरु
षेप्रतिबिम्बतइतिपुंसोविद्यमानवृत्तिग्राहकत्वम्। प्रतिबिम्बोत्रपुरुषस्यतदवच्छेद्यत्वमेवनत्वादर्शादिवप्रतिबिम्बः।
उभयोरपिनीरूपत्वादान्तरत्वाच्च। पुरुषोपिवृत्तिसंबन्धात्तद्गतविषयाकारताभाक्। वृत्तिश्चतत्संबन्धात्तत्स्वरूपप्रकाशभाक्।

स्वभावात्। तथा च पतञ्जलेः सूत्रे तदा द्रष्टुः स्वरूपेऽवस्थानम्। तदा समाधौ। वृत्तिसारूप्यमितरत्रेति। व्युत्थाने याश्चित्तवृत्तयस्त
दविशिष्टवृत्तिः पुरुष इति तद्भाष्यम्। पुरुषस्य वृत्तिभिश्च वृत्त्यवच्छिन्नः पुरुष एव वृत्तिसारूप्यात् तत्र वृत्तित्वव्यवहारः। तत्सारूप्या
त्पुरुषेऽपि दुःखादिमानिव कर्तापि कर्तेव अभोक्तापि भोक्तेव पश्यति स एव पुरुषस्य भ्रमात्मको भोगः। तद्धानिरेव च मोक्ष इति
भावः। अवच्छेदकस्थले प्रतिबिम्बव्यवहारस्तु प्रतिबिम्बसादृश्यात्। यथा रव्यादिप्रतिबिम्बं सोपाधिजलादिधर्मान् चाञ्च-
ल्यादीन् गृह्णातीव तथाऽवच्छेद्यमपि तदन्तर्भावात्तद्धर्मानिति। तथा च तृतीये द्वितीयपादे व्याससूत्राणि। अत एव चोपमा
सूर्यकादिवत्। अम्बुवदग्रहणात्तु न तथात्वं वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमिति। अत एव यतो यमात्मा चै
तन्यस्वरूपो निर्विशेषो वाङ्मनसातीतोऽतस्तस्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामाश्रित्य श्रुतिषु प्रतिबिम्बोप
मोपादीयत इत्यर्थः। नन्वेवमपि प्रतिबिम्ब एवास्त्वत आह। अम्बुवदिति। जलवदुपाधीनां पृथगविप्रकृष्टदेशानां ग्रहणाभा
वेन न तत्र प्रतिबिम्बत्वमित्यर्थः। केन तर्हि धर्मेण तदुपमा तत्रेत्यत आह। वृद्धिह्रासेति। जलगतं हि रव्यादिप्रतिबिम्बं जलवृद्धौ
वर्द्धत इव तद्ध्रासे ह्रसतीव तच्चलने चलतीव तद्भेदे भिद्यत इवेति जलधर्मान्नु विधायि तत्तु परमार्थतः सूर्यस्य तथात्वमेव प
रमार्थतोऽविकृतमेकरूपमपि देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान् वृद्धिह्रासादीनित्येवमुभयोर्दृष्टान्तदार्ष्टान्ति

सं॰ मे॰ ५२

कयोः सामञ्जस्यादन्तिशेषः प्रतिबिम्बत्वेनापि ब्रह्मण उपाधिषु व्यवहार इत्यर्थः। वृत्तिजन्यं फलं च वृत्तिद्वारा शुद्धचेतने तस्य प्रति
बिम्बनमेतदेव प्रकटता । तत्संबन्धाच्च परसमवेतक्रियाफलाश्रयत्वाद्विषयस्य कर्मत्वम् । अन्तःकरणद्वारा पुरुषस्य वृत्त्याश्रय
त्वात्कर्तृत्वम् । जानातेश्च वृत्तिविशेषस्य वाच्यत्वात् । तत्र दण्डीति ज्ञाने वृत्तिस्थदण्डाकारेणायः पुरुषस्य संबन्धः सा प्रकारता द
ण्डत्वनिष्ठश्च सोऽवच्छेदकत्वाख्यप्रकारतासंयोगनिष्ठः संसर्गिकविषयता पुरुषनिष्ठः स विशेष्यता तासां परस्परमव
च्छेद्यावच्छेदकभावश्च परेषामिवास्माकमपि । विषयतात्वं च वृत्त्यनुयोगिकचेतनसंबन्धविशेषनिष्ठसंबन्धविशेषत्वम
खण्डं यत्संप्रतिपन्नं तदेव । न्यायनये तु तत्तद्विषयविशिष्टज्ञानं विशेष्यतादिरूपम् । अतिरिक्तमेव वा तत् । विषयतात्वं तु
त्रितयसाधारणमाद्ये व्यतिरिक्तं स्वीकार्यम् । तत्तद्वृत्त्यारूढाकारस्य बाह्यघटाद्याकाराविभागेनैव ज्ञानविषयता तादृ
शाकारकत्वमेव ज्ञानेऽवच्छेदे च विषयिता । एवं पुरुषोऽपि वृत्त्यारूढः पुरुषे प्रतिबिम्बतद्वत्त्वहमिति ज्ञानोपपत्तिः । आत्मा
नमात्मना जानामीत्याद्युपपत्तिश्च । अहमिति जानामीत्याद्युपपत्तिश्च । बिम्बप्रतिबिम्बयोर्वास्तवभेदाभावात्स्वातिरिक्ता
प्रकाश्यत्वरूपं स्वप्रकाशत्वं पुरुषस्योपपन्नम् । एतन्मते साक्षिभास्यमिति तन्निष्ठप्रकारकत्वावच्छिन्नतद्विशेष्यकत्वरू
पं प्रामाण्यमपि ज्ञानस्य स्वतो ग्राह्यमेव औत्तरकालिकबाधे तु तदंशे भ्रमत्वकल्पनम् । यथा च प्रदीपो रूपादिकं प्रकाशयन्

राम॰ ५२

त्मानमपि प्रकाशयति। एवं ज्ञानमर्थं प्रकाशयदात्मानमपि प्रकाशयति। एवं शब्दोपि ज्ञानशब्दप्रदीपानां त्रयाणामपि स्वप्रकाशत्वात्
। अत एव ज्ञाने सति जानामि न वेति संशयस्य न जानामीति विपर्ययस्य चाननुभव:। अनुव्यवसायस्य ज्ञानग्राहकत्वेऽनवस्था। घटं
जानामीति वज्ज्ञानं जानामीत्यनुभवाभावाच्च। अभेदेपि कर्मकर्तृभावस्य विषयविषयिभावस्य च स्वप्रकाशदृत्याद्व्यवहारा
नुरोधेन स्वीकारे बाधकाभावादित्यन्यत्र विस्तर:। एवं व्याप्याकारवृत्तिप्रतिबिम्बरूपव्याप्यज्ञानोत्तरं शब्दाकारवृत्तिप्रतिबिम्ब
रूपशब्दज्ञानोत्तरं च जायमानबौद्धव्यापकशब्दार्थरूपतत्तदर्थाकारवृत्तिप्रतिबिम्बनमेवानुमिति: शाब्दबोधश्च। शशशृङ्गा
लीकादिशब्दानां प्रातिपदिकत्वसिद्धिरपि बौद्धार्थरूपतत्तदर्थवत्त्वेनैवोपपद्यते। पर: सन्निकर्ष इति सूत्रेस्थानि वत्सूत्रे च भा
ष्ये स्पष्टमेतत्। ईदृशानामप्यन्त:करणे वासनासत्त्वे शब्दाद्बोध एव मानम्। पूर्वपूर्वबोधैर्वासनाजननाच्च। अनादित्वाच्च व्यवहा
रस्य न दोष:। तदुक्तं हरिणा—यो वार्थो बुद्धिविषयो बाह्यवस्तुनिबन्धन:। स बाह्यं वस्त्विति ज्ञात: शब्दार्थ: सम्यगिष्यत इति। अ
बद्धी रूपोपि बहीरूपतयाऽध्यस्त इति पुण्यराज:। अध्यासे बीजं चान्त:करणस्य रागादिदोष एव। अत एव बाह्यार्थानयनमुपप
न्नम्। यत्र ह्याभ्यन्तरार्थस्य बाह्यार्थेन संवाद: स शब्द: प्रमाणं विसंवादे त्वप्रमाणमिति व्यवस्था। एवमेवायं शब्द: प्रमाणं न वे
त्यादेरिदं ज्ञानं प्रमा न वेत्यादेश्चोपपत्ति:। अलादिपदेभ्योपि बौद्धाकारविषयक एव बोध:। स च बौद्ध आकार: सामान्यरूप एवावय

ल·म·
४३

वसंस्थानगतविशेषस्याग्रहात्। तेषांशक्तिग्रहोपिवक्तृमुखान्तदीयगुणसमृद्ध्यादिश्रवणानन्तरंतादृशगुणसमृद्ध्यादिविशिष्टे
सामान्यतोबुद्ध्यागृहीतेआकारेएव· हेतुमतिचेतिसूत्रभाष्येकंसघातयतीत्येतद्व्याख्यानावसरेतेषामुत्पत्तिप्रभृत्याविनाशाद्
द्धीर्व्याचक्षाणाः सतोबुद्धिविषयान्प्रकाशयन्तीत्युक्तेः। तदुक्तंहरिणा· शब्दोपहितरूपांश्चबुद्धेर्विषयतांगतान्· प्रत्यक्षमिवकंस
सादीन्साधनत्वेनमन्यते। बुद्धिप्रवृत्तंरूपंचसमारोप्याभिधातृभिः। अर्थेषुशक्तिभेदानांक्रियतेपरिकल्पनेति। प्रत्यक्षमितिमननक्रि
याविशेषणम्। इन्द्रियजज्ञानाभावादिवेति। अर्थेषुबाह्येषुबौद्धमेवैकस्यशक्तिनानात्वंबाह्यैःध्वस्यतेदृश्यज्ञानविषययोरभेदा
ध्यासात्। अतएवदेशान्तरस्थंदेवदत्तंकाश्यांशृण्वतस्तत्रतत्रापश्यतोपिदेवदत्तोत्रनास्तीत्यतोधीः। सामान्येनबौद्धाकारेणा
स्यविजातीयतयासंमुग्धत्वेनाग्रहात्। अयंसदेवदत्तइत्युपदेशोत्तरंसामान्यरूपोपिबौद्धआकारोविशेषरूपेणविवर्तते। एतेना
तीतनलादिभाविचैत्रादिवर्तमानप्रसिद्धासन्निहितवस्तुगोचराःसंस्काराअनादयोधारारूपेणविशिष्यबोधान्यथानुपपत्त्या
कल्प्यन्तेतैःस्मृतेष्वर्थेषुशक्तिग्रहोबोधश्चेतिनैयायिकनव्योक्तमपास्तम्। विशिष्यबोधरूपहेतुत्वासिद्धेः। विशिष्यगृहीतसंग
तिकानामिवतद्दर्शनेपदस्मरणापत्तेश्च। पदप्रकारकबोधस्यैवानुभवाच्च। अतएवाज्ञातार्थेकेचिदिमंपदमितिज्ञातेपुन
लचैत्रगवयादिपदेषुश्रुतेषुकएतदर्थइतिप्रश्नउपमानलक्षणाकथनादिनाप्रतिवचनंचदृश्यते। अतएवसादृश्याद्युपाये

राम·
४३

प्रसिद्धपदसामानाधिकरण्यात्। तद्बोधकतया कोशस्य प्रामाण्यं व्युत्पादयन्ति। नलत्वादिना बो
नशक्तिबोधकतयोपमानस्य

धस्य तेन रूपेण शक्तिग्रहासंभवात्। एतेन प्रमेयत्वादिरूपेण सर्वानुभवसत्त्वात्तत्र प्रमेयत्वांशस्यानुद्बुद्धसंस्कारत्वेन मो
षे प्रथमतस्तत्तज्जात्यादिविषयं निर्विकल्पकं स्मरणं ततो ज्ञानलक्षणया विशिष्टतत्तत्पदार्थोपस्थितौ तत्र शक्तिग्रहो बोधश्च।

ज्ञानलक्षणा च मनःसंयुक्तात्मवृत्तिसंस्कारविषयत्वरूपफलबलकल्प्योद्बोधकवशात् स्मृतेः क्वाचित्कत्वकादाचित्कत्वनिय
मेन नन्सार्वद्व्यापत्तिरित्यपास्तम्। अनुभवविरुद्धतादृशस्मृतिकल्पने मानाभावाच्च। सर्वत्र स्मरणेऽनुभवसमानाकारत्वस्यैव
दर्शनात्। किंच तद्देशमोषे पि कदाचिद्दृष्टिविषयजातानुभवानामेवं तथा ज्ञानं भवति
ननु कदाचिदपि तथाननुभूतानां तथा ज्ञानं ज्ञानलक्षणासहकारेणापि अनुभवविरोधात्। अन्यथा ब्रह्मणोऽपि
तथा स्मरणे ज्ञानलक्षणया तथानुभवे च तत्तत्त्यतापत्तिरित्यलम्। यत्र तु नगुणसमृद्ध्यादिश्रवणं तत्र पदमात्रविषयकमेव
ज्ञानम्। अत एव पदं तु श्रुतमर्थं न जानामीति व्यवहारस्तत्र गुणादिश्रवणोत्तरं तु श्रुतोऽस्ति स न दृष्ट इति व्यवहारः। अस्य कश्चि
दर्थोऽभिविष्यतीति तु पदत्वहेतुकमनुमानमेव। बौद्धार्थस्य बोधेन शब्देनाविभागात्तन्मूलाभेदाध्यवसायेन शब्दार्थाकारवृ
त्तौ जायमानायां स्वाकारस्यापि समर्पणमिति शब्दस्यापि विषयता। अत एव शब्दे ग्राह्यत्वग्राहकत्वरूपशक्तिद्वयस्वीकारः। त

31

अतात्पर्यवशाद्द्विधा शब्दप्रकारको बोधः। अर्थबाधे तु गौणमित्ययमाहेत्यादावनुवादे शब्दविशेष्यकः। अनुकरणे तु शब्दमात्रविषयकः। एवमर्थेनापि स्वाकारसमर्पणे तत एव शब्दाकारस्यापि समर्पणमिति सर्वं ज्ञानं शब्दानुविद्धम्। तदुक्तं न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते इति। उत्तरार्द्धेनानुव्यवसायः प्रमाणं दर्शितम्। अत एव चक्षुषा दृश्यमानमप्यज्ञातबोधकं पदार्थं किमिदमिति न जानामीति व्यवहरन्ति तदुपदेशे च ज्ञातमिदमिति व्यवहरन्ति। एतेन मणिमञ्जर्यादिन्यायेन तत्तत्पदवाच्यत्वग्रहो विशेषधर्मप्रकारेण ज्ञाने तथा व्यवहारेऽनुव्यवसाये च हेतुरिति नैयायिकनव्योक्तमपास्तम्। मणिमञ्जर्यादिन्यायेन कारणत्वकल्पनापेक्षयास्मदुक्तस्यैवौचित्यात्। तद्ग्रहे सति स्मृतस्य तस्य भाने बाधकाभावात्। तत्तदर्थे प्रतिबन्धककल्पने गौरवमनुभवविरोधश्च। किञ्च पिकपदशक्तिग्रहवतोः यः कोकिल इत्यनुव्यवसायापत्तिस्तत्र पिकत्वकोकिलत्वयोरभेदात्। मम तु तत्तत्पदभानान्न दोषः। तत एव कणादसूत्रवृत्तिकृद्भिः कीर्तिदिङ्नागादिभिर्नामसंसर्गविषयकत्वं सविकल्पकलक्षणमुक्तम्। पातञ्जलानामपीत्थमेव सविकल्पकलक्षणं संमतम्। एतेन ज्ञानं शब्दानुविद्धमेवार्थज्ञानस्य वाचकशब्दाभावादर्थवाचकेनेति करणयुक्तेन घट इति जानामीति तद्व्यवहार इत्यपास्तम्। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति प्रत्यक्षलक्षणे व्यपदेश्यत्वं विशेषणं वदता गौतमेन शाब्दज्ञाने शब्दभानस्याङ्गीका

मूढेनैवतादात्म्यंनतुतदवयवैरपीतितत्रभेदः प्रतिभासमात्रकल्पितत्वेनाऽप्रस्तो राहोः शिरइतिवत्· अभेदस्तुव्यावहारिकएवे
तिवाचस्पतिमिश्राः। अन्येतूभावपिव्यावहारिकौ। स्वर्णंकुण्डलंस्वर्णस्यकुण्डलमितिचव्यवहारात्। एतद्व्यवहारान्यथानुपप
त्त्यैवतयोः क्वचिदविरोधस्याप्यङ्गीकारात्। अन्यथानुपपत्तिश्चेदस्तिवस्तुप्रसाधिका·पिनष्टि दृष्टवैमत्यं सैवसर्वबलाधिकेतिश्रीहर्षो
क्तेः। किंचस्वर्णत्वरूपेणाभेदस्यकुण्डलत्वरूपेणभेदस्यस्थितिरित्यविरोधः। सामानाधिकरण्यंचैकार्थबोधकत्वमेव। प्रकार
विशेषानपेक्षोः भेदस्तुभेदेनविरुद्धः प्रतिभासकल्पितत्वेपियावद्व्यवहारदर्शनंब्रह्मज्ञानतः प्राक्शुक्तिरजतवत् तद्व्यवहारान
पगमेनव्यर्थपरिश्रमत्वात्। राहोः शिरइत्यत्रानेकावस्थायुक्तराहोरेकावस्थायुक्तशिरसोः वयवत्वेनतत्रापिव्यावहारिकभेद
एव। वस्तुतस्तत्रविकल्पात्मकमेवज्ञानंशब्दज्ञानानुपातीवस्तुशून्योविकल्पइतितल्लक्षणंपतञ्जल्युक्तम्। शब्दज्ञानजन्योबा
ह्यवस्तुशून्योविकल्पइतितदर्थः। किंचशब्दप्रयोगंतज्जन्यंज्ञानं —— चानुपतति। तज्जनकोबाह्यवस्तुशून्योवृत्तिविशेषोबाधाबा
धकालाविशेषेणसदैवजायमानोविकल्पइत्यर्थः। अनेनवक्तुः शब्दप्रयोगजनकमानसज्ञानस्यापिविकल्पत्वमुक्तम्। विपर्ययेतु
बाधोत्तरंशब्दप्रत्यययोरभावान्नतेनगतार्थता। हरिणाप्युक्तम्। अत्यन्तासत्यपिह्यर्थे ज्ञानंशब्दः करोतिहीति। अत्यन्तेत्यस्यबहिरि
त्यादिः ज्ञानमवष्टभ्यशब्दः स्वप्रयोगंकरोतीत्यपितदर्थः। अतएवपुरुषस्यचैतन्यमितितदुदाहरणंपातञ्जलभाष्येदत्तंनहितस्मा

ल·मे·
४७

दस्यकश्चिद्विशेषः। व्यपदेशिवदित्यस्यायमर्थः। सुखव्यवहारविषये यथा शास्त्रीयं कार्यं तद्वत्सुखव्यसंबन्धाद्यभावेऽपि कार्यमिति। स्वर्ण
कुण्डलस्थले देशकालैक्येऽपि न्यूनाधिकमूल्यदर्शनेन व्यावहारिकभेदोऽवश्यं स्वीकार्यः। नहि प्रातिभासिके न तदुपपत्तिः शुक्तौ
प्रातिभासिकरजते सर्वथा मूल्याभावादिति इत्यपि किंचित्। राहोः शिर इत्यादावव स्याकल्पितो वयवावयविभाव इति तु न युक्तम्
बोद्धृणामनेकावस्थाविशिष्टस्य तत्त्वेन राहुपदाद्बोधात् अत एवैयायेत्यादौ विकारस्य प्रथमावयवत्वं कथमित्याशङ्क्य लोकवि
ज्ञानात्सिद्धमित्युक्तं भाष्ये। लोकवदेव शास्त्रेऽपि विचारितरमणीयो व्यवहारः। किंचास्य विकल्पात्मकज्ञानजनकत्वेन वस्तुसिद्ध्यनापत्तिः
। विषयभेदे न विषयताङ्गीकारे तु अन्त्यः। केचित्तु शब्दाभेदेऽपि विकल्पेन व्यवहारः शास्त्रीयकार्यनिर्वाहश्च यथा घ्नते व्यनद्यतनोऽस्तीति
लङ्विधायके भाष्ये प्रयुक्तमिति तदाशय इत्याहुः। केचित्तु तदभिन्नाभिन्नस्य तदभिन्नत्वमित्याशयेन शङ्का। अयं च न्यायो मूलकार
णोपादानककार्योपादानके कार्ये मूलकारणाभेदस्यापि व्यवहारेण सिद्धः। यथा तन्मात्राद्युपादानकेऽपि प्रकृत्याद्युपादानकत्व
म्। गुणो नाम सदित्युक्ताशयस्तु यत्र स्वाभिन्नवस्तु हारकः स्वस्वरूपानुगमस्तद्विषय एवोक्तन्याय इति। स्वर्गनरकयोस्तु नैकांय
दन्तः करणावयवपरिणामः सुखं तदतिरिक्तावयवपरिणाम एव दुःखमित्यङ्गीकारात्। येनोच्चारितेन सास्नालाङ्गूलककुदखु
रविषाणिनां संप्रत्ययो भवति स शब्द इति भाष्याशयस्तु यथा चिज्जडयोस्तादात्म्यावभासेऽपि चित्त एवभासकत्वं जडस्यावभा

राम·
४७

स्यत्वमेवस्वभावात्।तथास्वभावादेवशब्दस्यभासकत्वमर्थस्यावभास्यतेतिवदन्ति।तस्मादुपावच्छिन्नाकाशधर्मोऽयमान्तरः स्फो
टोऽर्थश्च बौद्ध एवं ज्ञानविषयः शक्तिग्रहविषयश्च ज्ञानं च वृत्तिरूपं बुद्धिधर्म एवेति।एकदेशस्थत्वात् तेषामितरेतराध्यासः शब्दार्थ
प्रत्ययानामितरेतराध्यासात् संकरस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानमिति योगसूत्रोक्त उपपन्नः।सचानादिवासनावशा
दनादिरेव।एवं शब्दार्थधर्मयोरिति न कुतर्कावसरः।अतएव निकारोऽग्रे पश्चाद्धूनमहहभोस्तद्धि निधनम्।रामेति द्व्यक्षरं नाम मा
नभङ्गः पिनाकिनः।गर्वभङ्गो भार्गवस्य शौर्यभङ्गश्च वालिनः।हिरण्यपूर्वं कशिपुं प्रचक्षत इत्यादि संगच्छते।अन्यथा हिरण्यक
शिपुनामानभिज्ञप्रतीतेरनुभवसिद्धत्वात्।अतएव वक्रश्चितपदत्वं दोषोऽपि क्वचिन्न दोषः।उदेति सविता ताम्रस्ताम्र एवास्तमे
ति च।संपत्तौ च विपत्तौ च महतामेकरूपतेत्यत्र ताम्रपदं विनानन्ताद्दृशो बोधः।पदप्रकारकबोधादिति प्रकाशकृतः।तदुक्तं हरि
णा- यदन्तः शब्दतत्त्वं तु नादैरेकं प्रकाशितं।तदाहुरपरे शब्दं तस्य वाक्ये तथैकता।अर्थभागैस्तथा तेषामान्तरोऽर्थः प्रकाशत इ
ति।एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थिताविति च।अन्तस्तत्स्थितावपि बहिर्भेदेन भासेते।तस्यैव शक्तिभेदात्।अक्रमे
तस्मिन् क्रमभासोऽपि तच्छक्तिवशादेवेत्यपि तत्रैव स्पष्टम्।किंच बौद्धपदार्थानङ्गीकारे सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्
।वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे इति स्मृतेः।स भूरिति व्याहरत्स भूमिमसृजतेति श्रुतेश्च सृष्टेः प्राक् भूः शब्दादिभ्य।

त्तदर्थज्ञानपूर्वकंसृष्टिरितिलाभेनतदा बाह्यभुवोऽभावाद्भूः शब्दस्यशक्तिग्रहपूर्वकं कस्यार्थस्यबोधः स्यात्। नचजातेर्नित्य
त्वात्तत्रशक्तिग्रहइतिवाच्यम्। अद्वैतिनांजातेरप्यनित्यत्वेनतस्याअपिकेनचिद्वैदिकशब्देनैवज्ञानपूर्वंब्रह्मणानिर्माणेतत्राप्य
स्याएवदुरवस्थायाः सत्त्वात्। निराश्रयजातिसत्त्वेमानाभावाच्च· नचब्रह्मत्वावच्छिन्नब्रह्मसत्तायाजातित्वेऽप्यवच्छेदकाभावा
त्तस्यास्तदाजातित्वाभावात्। किंचतत्तद्व्यक्त्यवच्छिन्नाब्रह्मसत्ताजातिरितिगौरवान्नयुक्तमित्यग्रेवक्ष्यते। अपागादग्नेरग्नित्व
मितिश्रुत्यास्तन्नाशस्यैवकथनाच्च। तस्मात्सर्वज्ञत्वाद्भगवदनुग्रहाच्चवेदलाभवत्तदैवस्वबुद्धिवर्त्तिपदार्थस्यस्थूलरूपेणभान
म्। तत्तत्संबन्धग्रहोबोधश्चहिरण्यगर्भस्येतिबोध्यम्। सचायंस्फोटआन्तरःप्रणवरूपएव। ओंकारएवसर्वावाक्सैषास्पर्शोष्मभि
र्व्यज्यमानाबह्वीनानारूपाभवतीतिश्रुतेः। बह्वीवाक्यपदादिरूपानानारूपाघटपटादिरूपाच। अकारएवेतिश्रुत्यन्तरेपाठस्तत्रा
प्यवयवद्वाराप्रणवोपलक्षणत्वम्। द्वादशस्कन्धेभागवतेप्रणवस्यस्फोटत्वंस्फुटमेवोक्तम्। तत्रहिसमाहितात्मनोब्रह्मन्ब्रह्मणः
परमेष्ठिनः। हृद्याकाशादभून्नादोवृत्तिरोधाद्विभाव्यते १ हृदाकाशादित्यर्थः। यःकर्णपुटपिधानेनश्रोत्रवृत्तिनिरोधादस्माभिरपि
विभाव्यतेश्रूयते। ततोभू ‾त्त्रिवृदोंकारोऽव्यक्तप्रभवःस्वराट्। यत्तल्लिङ्गंभगवतोब्रह्मणःपरमात्मनः २ त्रिवृत्त्रिमात्रः अव्यक्त
ईश्वरःप्रभवोयस्यसः। अतएवाहभगवतोलिङ्गं·गमकः कोसौपरमात्मातत्राह। शृणोतियइमंस्फोटंसुप्तश्रोत्रेचशून्यदृक्। येनवा

गभ्यज्यते यस्य व्यक्तिराकाश आत्मनः २ श्रुतेश्रोत्रेकर्णपिधानादिवृत्तिकेइमंप्रणवरूपं स्फोटं स्थूलस्वरूपेण परिणतमपि यः शृ
णोति परमात्मा जीवस्यतु करणाधीनज्ञानत्वात् करणस्यचावृत्तिकत्वान्नतदाश्रोतृत्वम्।ईश्वरस्य यतः शून्ये पीन्द्रियवर्गे दृ
गृज्ञानं यस्य तादृश इति श्रोतैव जीवस्य तदुपलब्धिस्तु ईश्वरद्वारिकैव। यथा निद्राकाले लीनेन्द्रियमपि जीवं परमात्मैव शब्दं श्रुत्वा
प्रबोधयतितद्वत्। येन प्रणवेन वागूब्रह्म तीव्यज्यते यस्य च हृदयाकाशे आत्मनः सकाशाद्व्यक्तिः ३ स्वधाम्नो ब्रह्मणः साक्षाद्वा
चकः परमात्मनः।ससर्वमन्त्रोपनिषद्वेदबीजं सनातनम्। ४ स्वधाम्नः स्वकारणस्य।किंच सतदंशभूतसमस्तदेवतावाचकोपी
त्याह।सप्रणवः सर्वमन्त्राणामुपनिषद्रहस्यं सूक्ष्मं रूपम्।यतो वेदकारणं तत्कारणत्वेपि नविकारित्वं यतः सनातनं सदेकरू
पम्। तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह। धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः ४ अकाराद्या अकारोकारमकाराः।तस्ये
त्यवयवावयविभावे षष्ठी। यैरकाराद्यैस्त्रयस्त्रित्वसंख्यायुक्ताभावाधार्यन्ते तत्कारणत्वात्। गुणाः सत्त्वरजस्तमांसि।नामा
निऋग्यजुःसामलक्षणानि। अर्था भूर्भुवः स्वर्लोकाः।वृत्तयो जाग्रत्स्वप्नसुषुप्तयः।अनेन तस्यैव सर्वप्रपञ्चकारणत्वमुक्तं ५ त
तोऽक्षरसमाम्नायमसृजद्भगवानजः।अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम्। ६ ततोऽकारादिभ्योऽन्तःस्थाद्याभाघक
यस्यतम्। ६ तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः।सव्याहृतिकान्सोंकारांश्चातुर्होत्रविवक्षया ७।

ल· मे· ४९

०थः स्यात्। नचजलं ... त्य
त्वारो होत्रुपलक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं होत्राध्वर्यवादिकं कर्मचातुर्होत्रंतद्धि वसयेत्यर्थकमुक्त.....नानिर्माणे ...ाप्य
त्तरीत्यापदसत्ताभावाशङ्कोत्तरमूतंव्याप्तिमत्त्वात्तुशब्दस्येतिप्रतीकमादायोक्तमभिधानाभिधेयरूपाबुद्धिर्हृदयं। ...
रबोधनेच्छया पुरुषेणोदीर्यमाणाकण्ठादिषुवर्णभावमापद्यबाह्याकाशस्थंशब्दंस्वस्वरूपंकृत्वाश्रोत्रद्वारेणतत्रस्थितांश्रोतुर्बुद्धिम
नुप्रविश्यसर्वार्थसर्वाभिधानरूपांतत्तद्बुद्धिंव्याप्नोति पुरुषयत्नजावक्त्रोद्भवाः परंनश्यन्तिनशब्दः सचतदनुरक्तोर्थमत्ययंजन
यतिइतितत्रत्यपदत्वादिकंवक्त्रोद्भवास्तेष्वारोपयन्तितत्कृतनाशादिचतस्मिन्पुरुषबुद्ध्यवस्थस्यैवचार्थस्यप्रत्ययमादधातिशब्दस्ते
नैवतस्यसंबन्धादिति। सचशब्दोवस्तुतएकोपितत्तद्वर्णसंस्कारैः प्रतिबिम्बिततत्तद्रूपोऽनन्तपदरूपतामिवापन्नइतिसर्वपदरूपः सर्वार्था
भिधानशक्तिः। साशक्तिर्योगिप्रत्यक्षगम्यानास्मज्ज्ञानगम्यापरन्त्वेवंव्यवहारादिनातज्ज्ञानेनतस्यैवास्माकंबोधइतिमर्यादा। एवमेकैकव
र्णोपिसहकारिवर्णान्तरसंबन्धादनन्तपदरूपइतिसोपितच्छक्तिरिति गकारौकारविसर्जनीयागोर्वाचकाइतिलोकस्याविचारितरमणीयेत
त्समूहेवाचकत्वग्रहस्ताहृशस्यैवचशास्त्रेणान्वाख्यानंतद्दृष्ट्याबोध्यम्। तदुक्तंभाष्ये अथवाप्रतीतपदार्थकोलोकेध्वनिःशब्दइति- राम
लोकेर्थबोधकत्वेनगृहीतोध्वनिर्वर्णात्मकस्तत्समूहः शब्दइतितदर्थः। अथगौरित्यत्रकःशब्दइतिप्रश्नेइदमुत्तरम्। अखण्डोपिस्फो
टोगकाराद्यवस्थाभ्योभिन्नोऽभिन्नश्चरचरमावस्थयाविसर्जनीयादिरूपयापदादिरूपेणव्यज्यतेइतिवर्णेषुतत्त्वव्यवहारोपपत्तिर्लोकस्ये ४२

तिबोध्यम्। एवंसर्वपदेषुपदान्तरसहकारेणनानावाक्यभवनशक्तित्वंतत्तद्वाक्यार्थबोधजनकशक्तिमत्त्वंच। यद्यपिपरस्यबुभुत्सितार्थप्र
त्यायनायशब्दप्रयोगः परस्यचप्रवृत्त्यादिविषयएवप्रायेणबुभुत्सितः सचवाक्यार्थएवेतिसर्वेशब्दास्तत्पराएव। यत्रापिकेवलंघटइति
प्रयुज्यते तत्राप्याकाङ्क्षातात्पर्यादिवशादस्तिचलतिच्छिद्यतेवेतिपदान्तराणांनामध्याहारः क्रियाविशेषतात्पर्यानवधारणेप्यस्तीत्यध्याहा
रः। बुद्धिसत्तायाबोधविषयबौद्धपदार्थेनाव्यभिचारात्। लोकेऽस्त्यर्थंविनाशुद्धपदार्थानवगतेश्च। एवंक्रियापदादिमात्रप्रयोगेसर्वकार
काद्यध्याहारः। चैत्रोग्निनातण्डुलान्पचतीत्यादिप्रयोगस्तुकारकान्तरनिवृत्त्यर्थः क्रियान्तरनिवृत्त्यर्थोनियमायेतिस्पष्टमर्थवज्रसूत्रे
भाष्ये। तथापियौगिकेषुअन्वाख्यानलाघवायपदानितत्रप्रकृतिप्रत्ययभागास्तत्तदर्थाश्चकल्प्यन्तेतद्द्वारापदार्थबोधनंवाक्यार्थबोधनंच
शास्त्रफलम्। केवलरूढेषुतुवर्णसाजात्यादिनावयवकल्पनम्। स्पष्टंचेदंनिरुक्ते। यत्रतुवाक्यस्थेवशास्त्रेणसंस्कारस्तत्रनैवपदात्पदार्थ
बोधः। यथाषड्दन्तइत्यादौ। अतएवङसीतिसूत्रेभाष्येधुङ्गाहयः पूर्वान्ताएवकिंनक्रियन्तइत्याशङ्क्य पूर्वान्तेष्टुत्वापादनेनसमाहितं
म्: अन्यथातकारविशिष्टस्यसत्पदाद्यर्थबोधकत्वायपरादित्वमेवावश्यकमितितद्विचारासंगतेर्निर्दलत्वात्। ममतुवाक्यार्थबोधेभेदा
भावान्नदोषः। एतेनपदात्पदार्थज्ञानपूर्वकएववाक्यार्थबोधइत्यपास्तम्। वस्तुतः सर्ववाक्यमखण्डमेव। पदान्यसत्यान्येव। पदात्पदा
र्थबोधइत्यङ्गीकारेचैत्रादिपदानांसकलक्रियासाधारणेर्थेगृहीतशक्तिकानांतत्तदर्थान्वितविशेषबोधायलक्षणापत्तौशक्त्याबोधक

त्वभङ्गः। सामान्यरूपेणविशेषबोधेपिलक्षणेतिस्पष्टं काव्यप्रकाशे। किंचपदानांसत्यत्वेराजानंराज्ञाराजनीत्यादौराजरूपार्थप्रत्ययकस्यानियतत्वंनस्यात्। सत्यस्यनियतत्वात्। हेराजपुरुषेत्यत्रराजेतिक्रियापदार्थप्रतीत्यापत्तिश्च। अतएवभाष्येनलक्षणेनपद्कारा अनुवर्त्याइत्यादिनाऽऽशितःकर्तृत्यादौपदानामसत्यत्वंदर्शितम्। सत्यत्वेतुलक्षणेनतदननुवर्त्तनासंगतिः। पदप्रकृतिःसंहितेत्यत्रतुषष्ठीसमासः। तथाचतत्रैवकैयटः संहितैवापौरुषेयीपदानितुपौरुषेयाणीति। किंचतेषांसत्यत्वेऽश्वकर्णादावश्वाद्यर्थप्रतीत्यापत्तिः। इदंरूढमिदंयौगिकमिदंयोगरूढमित्याद्यपिशास्त्रकृत्कल्पनैवविशिष्टार्थबोधार्था। बुद्धेचनत्रप्रयोजनमेपत्तेरुपायपरित्यागः। अतएवव्याकरणभेदेनोपायाअनियताः। तदुक्तम्-उपादायापियेहेयास्तानुपायान्प्रचक्षते। उपायानांचनियमोनावश्यमवतिष्ठतइति। ननुपदानामसत्यत्वेप्रतिनिध्युच्छेदः। तथाहिव्रीहिभिर्यजेतेत्यादौयागेनसकलद्रव्याक्षेपेव्रीहिश्रुतिर्नियमार्थाव्रीहिभिरेवनान्यैरिति। तत्रव्रीह्यभावेनित्यकर्मणःप्रारब्धकाम्यस्यचलोपोमाभूदितिप्रतिनिधिरुपादीयते। तत्रव्रीहित्वस्यशक्त्युपलक्षणत्वात् प्रतिनिधेरपिप्रोक्तत्वमित्यग्रेनिरूपयिष्यामः। तत्रप्रतिनिध्युपादानेपितद्वाक्याखण्डार्थस्यानवुष्ठानान्नित्यादेर्विलयः। नीवारकरणकक्रियायाअन्यत्वात्। एवंचक्रियानप्रतिनिधीयतेद्रव्यंतुप्रतिनिधीयते एवेतिन्यायोच्छेदः। किंचवनात्पिकआनीयतामित्युक्ते कः पिकइतिप्रश्नानुपपत्तिः। अपिचश्वेतंछागमालभेतेत्यादौक्रियायाश्छागद्रव्येणश्रौतःसंबन्धः द्वितीयाश्रुत्यासाक्षात्प्रापितत्वात्। श्वेतगुणस्यतुतत्सामान्

विशिष्टक्रियाबोधः। सामान्यशक्तिग्रहोपि तत्तत्पदार्थनिष्ठप्रकारतानिरूपितासंसर्गनिरूपिता या तत्तत्पदार्थनिष्ठविशेष्यता तद्
त्यर्थसमुदायः शक्त इत्येवं विशेष्यविशेषणभावापन्नैः शर्थएवेति न विपरीतो विशेष्यविशेषणभावः। यत्तु सर्वस्य सामान्यतः शक्तिग्रह एव बो
धक इति तन्न। कारकत्वधातुत्वाद्यज्ञाने तथा शक्तिग्रहासंभवात्। एतेन प्रातिपदिकार्थप्रकारकशाब्दबोधे तदर्थकपदोत्तरसार्थकप्रत्य
यतदर्थबोधकपदनिपातान्यतमजन्योपस्थितिर्हेतुरित्याद्यपास्तम्। कर्मत्वं घटः अमू घट इत्येतत्समभिहारव्युत्पन्नानां तत्तथा बोधे व्य
भिचाराच्च। न च स्वाव्यवहितोत्तरोत्पत्तिकत्वस्वसामानाधिकरण्योभयसंबन्धेन तत्तद्व्युत्पत्तिविशिष्टबोधे तत्तद्व्युत्पत्तिः कारणमिति न दो
षइति वाच्यम्। अनन्तकार्यकारणभावापत्तेः। यत्तु वाक्यशक्त्यङ्गीकारे पदार्थानामिव वाक्यार्थस्यापि स्मरणमेव स्यान्न तु अनुभवः। संबन्धि
ज्ञानतयैव पदज्ञानवत्तदुपयोगादिति तन्न। पदार्थानामपि स्मरणाभावस्योपपादनात्। किंच वाक्यार्थप्रतीतेर्नानुभवत्वम्। स्वर्गनरकादि
कं शृण्वतस्तदनुभवामीत्यप्रतीतेः। तस्माच्छाब्दत्वं ज्ञानत्वव्याप्यजातिविशेष एव नानुभवत्वव्याप्यमित्यलम्। तत्र संबन्धस्य संबन्धि
द्वयनिरूपितत्वेनैव बोधाद्वाक्येनो न पृथक्कृतद्बोधः। तदुक्तं हरिणा। नाभिधानं स्वधर्मेण संबन्धस्यास्ति वाचकम्। अत्यन्तपरतन्त्रत्वात्स्व
रूपेवास्यतु वाचिकेति। षष्ठ्येव संबन्धस्य वाचिका न तु संबन्धशब्दादीति तदर्थः। अभिधानम्। पदं संबन्धिनोः संघटनस्वभावत्वेन नित्यप
रतन्त्रत्वात् षष्ठीपदं विभक्तीनां वाक्यस्य चोपलक्षणम्। पदानां तु पृथक् स्वार्थबोधकत्वमपि। यत्तु मीमांसकैकदेशिनो वाक्यार्थे वाक्यस्य

उ·म· लक्षणेतितन्न। वाक्यबोध्यान्वयस्य संबन्धरूपत्वेन तत्र वाक्यबोध्यस्य संबन्धस्य पदार्थस्य वा संबन्धग्रहाननुभवेन वाक्यबोध्यनिरू

५४ पितसंबन्धमूलिकायास्तद्रूपायालातस्याअसंभवात्। अनुपपत्तिप्रतिसंधानं विना पितृष्ट्रोधेन तदप्रसराच्च। नच तात्पर्यविषयीभूतवाक्या

र्थानुपपत्तिस्तद्बीजम्। नियमतः पूर्वं तात्पर्यज्ञानस्यापि कल्पनापेक्षयाशक्तिकल्पनस्यैवौचित्यात्। नविसुक्त्वन्तिसामर्थ्यं वाक्यार्थेपि पदा

निन इति पूर्वोक्तोऽर्थे हेतुत्वेनोपन्यस्तायां वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव च दृश्यते इति भट्टकारिकायां लक्ष्यमा पाइत्यस्य प्रतीयमान

इत्यर्थः। दृश्यत इत्यस्य प्रतीतिविषयत्वेनानुभूयत इत्यर्थः। सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितिरिति पाठे लक्ष्य इत्यस्य प्रतीतिविष

य इत्यर्थकस्यास्तीति शेषः। सर्वत्रैव वाक्यार्थः प्रतीयमानो लक्ष्ये वेति स्थितिः। वक्ष्यमाणरीत्या वा कैयकदेशान्यायेनेत्यर्थः। अतएव केवल

पदप्रयोगेपीत्यर्थकं सर्वत्रैवेति सार्थकमित्याहुः। यत्तु पदानामेवान्विते शक्तिः पदैरेव तदर्थप्रतीत्युपपत्तौ वाक्येपि शक्तिकल्पने मानाभावा

त्। तदुक्तम्। एवं हि संबन्धग्रहणमयमर्थोनेन शब्देनाकाङ्क्षितसन्निहितयोग्येतरान्वितः संनिभिधीयत इति। पदानां सामान्यत इतरान्वि

ताभिधायिनी विशेषाविषयसामान्यबुद्धिग्राहकत्वाभिव्याहारे विशेषकारणत्वरूपाकाङ्क्षाज्ञानबलात्तत्पदार्थविशेषनिरूपितान्वयवि राम·

शेषबोधसिद्धिः। अन्यथा पदप्रयोगे व्यन्वयविशेषजिज्ञासोपपत्तिः। तथा अन्वयसामान्यज्ञानपूर्वकत्वनियमात्। विशेषतः पदार्थान्तरघ

टितस्य तदन्वयविशेषरूपवाक्यार्थस्याप्यनुपस्थितावप्यन्वितत्वादिसामान्यधर्मप्रकारेणोपस्थिते शक्तिग्रहः सुलभः। इतरान्विते ५७

तीतिर्हिभाणः तस्मद्त्वं हिजातेरेव न पाचकत्वादेरिति स्पष्टमेव। पाकक्रियाणामाश्रयभेदेन भेदात्तद्गतजात्यैव तासामेकाकारप्रतीतिजनकत्वमित्यन्ये। अतएव कणादेनापि सामान्यविशेष इति बुद्ध्यपेक्षमित्युक्तम्। अनुवृत्तिबुद्धिजनकत्वं सामान्यलक्षणं व्यावृत्तिबुद्धिजनकत्वं विशेषलक्षणमिति तद्व्याख्यातारः। तथा सदिति यतो द्रव्यगुणकर्मसु सा सत्तेत्युक्तम्। इतीत्यस्य व्यवहारप्रत्यया विति शेषः। अनेनेदमेव सर्वजातिषु मानमिति सूचितम्। तथाभावोऽनुवृत्तेरेव हेतुरिति सामान्यमेव भावः। सत्तानुवृत्तेरेव हेतुरिति सामान्यमेव द्रव्यत्वादितु अनुवृत्तेरितरव्यावृत्तिबुद्धेश्च हेतुरिति सामान्यं विशेषश्च। यावत्स्थित्यैकाकारप्रतीतिरनुवृत्तिरिति तद्व्याख्यातारः। यावत्स्थितीत्यस्याभावे पाचकत्वादेरपि जातित्वापत्तिः। कादाचित्कैकाकारप्रत्ययहेतुत्वाद्भाव्येभिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नमि— त्यनेनोपलक्षितनित्यत्वेनापीदं सूचितम्। गौतमोऽपि समानप्रसवात्मिका जातिरित्याह। यावत्स्थितिरेकाकारबुद्धिजननस्वभावेत्यर्थः। आकृतिर्जातिलिङ्गाख्येति चाह। जातिलिङ्गमिति आख्या यस्या इत्यर्थः। रूपादिष्वपि रूपत्वादिजातिव्यञ्जकं यत्तदाऽऽकृतिरिति तदाशयः। व्यक्तिस्तु आकृतिविशेषं समवायिकारणमेव मृत्कयाचिदाकृत्यायुक्तापिण्डो भवति स्वर्णकयाचिदाकृत्यायुक्तं पिण्डो भवतीति पस्पशायां पतञ्जलिरुक्ते। तत्राकृतेरनित्यत्वाद्धि शिष्टेऽनित्यत्वं विशेष्यांशमादाय नित्यत्वमपि नमादाय गौतमीये व्यक्तिः पृथग्गृहीतेति। चरकेऽप्युक्तम्। सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृदिति। एकत्वकरत्वमेकत्वबुद्धिकरत्वम्। यदनेकास्तु गवादिव्यक्तिषु अयं गौरयं गौरित्येवमाद्येकाकारबुद्धिरेकं सामा

न्यं विनानाभ्रान्ता भवति। एवं च तदेकत्वालम्बनास्त्यपि व्यक्तिभेदे एकत्वबुद्धिर्यन्नैव तदेव गोत्वमश्वादिभ्यो व्यावृत्तिबुद्धिजनकतया विशे
षइति तदर्थः। एतद्बीजमप्युक्तं तत्रैव तुल्यार्थता हि सामान्यं विशेषश्च विपर्यय इति तुल्यार्थता तुल्यानामर्थानां भावः। अर्थेषु तुल्यत्वं चैकाका
रप्रतीतिजनकधर्मवत्त्वम्। एवं च तेषां भावः सधर्म एव। एवं चैकाकारप्रतीतिजनकं यत्तः सामान्यमतस्तदेकत्वकरं यथा सकलगवीनां गोत्व
म्। विपर्ययः अतुल्यार्थता अनेकाकारप्रतीतिजनको धर्मः स यतो विशेषोऽतः पृथक्त्वकृत् सः। यथा गवाश्वयोर्गोत्वाश्वत्वे इति तदर्थ इति त
द्व्याख्यातारः। एवं च पाचकत्वमपि सामान्यं भवत्येकजातित्वं तु यथा न तथोक्तम्। अतिशायने इति सूत्रे भाष्येपि जननेया प्राप्यते सा जातिरि
त्युक्तम्। अनेनापि तस्या नित्यत्वं बोधितम्। एतच्च लक्षणमद्वैतिमते। ब्रह्मातिरिक्तस्य सर्वस्य तन्मते जन्यत्वात्। अविद्यादेरपि जन्यत्वमु
क्तम्। जीवानामप्युपाधीनां जन्यत्वेन विशिष्टानां जन्यत्वमेव। ब्रह्मणस्तु निर्धर्मकत्वात्तत्र जात्यभाव एव। अन्यथा न्यायादिनये परमाण्वा
दीनामजन्यत्वेन परमाणुत्वादिजात्यव्यापकत्वमस्य लक्षणस्य स्यात्। सरूपसूत्रे भाष्ये तु भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिरि
त्युक्तम्। तन्निष्कर्षस्तूक्तः। एतेन कारणतावच्छेदकत्वादिनैव जातिसिद्धिरित्यपास्तम्। सखण्डोपाधावपि तत्त्वद्योगनाशत्वादौ तच्चूर्ण
त्वादौ च तस्य सत्त्वेन कारणतावच्छेदकत्वादिना जातेरन्वयव्यतिरेकयोरुभयोरपि व्यभिचारेण कारणतावच्छेदकत्वादिना जातित्वसाध
नासंभवात्। बाधकाभावे इत्यादिविशेषणदाने तु गौरवम्। किंच घटत्वशरावत्वाद्यनेकधर्मपुरस्कारेणानेककार्यकारणभावस्वीकारापेक्ष

त्यासर्वानुगतं यं कंचित्सखण्डधर्ममवच्छेदकीकृत्यैककार्यकारणभावेलाघवेनकार्यतावच्छेदकत्वादिनानजातिसिद्धिरित्यलम्। शतशोपिगो
रित्युक्ते शुक्लत्वादिविशेषानवगमपूर्वं सामान्यस्यशब्दतोऽवगतेः साशब्दशक्याद्द्रव्यस्यैवशक्यत्वे तुलस्यगुणसमूहरूपत्वेनशुक्लत्वादिवि
शेषावगतिप्रसङ्गः। अतिरिक्तद्रव्यवादेपिद्रव्यस्यविशेषानालिङ्गितस्यबोधाभावेनसएवदोषः। उक्ताकृतेरपिशब्दवाच्यत्वाच्च। तत्रकृत्स्न
क्रिया—दिसामान्यरूपेणैवभासते। यद्यपिप्राथमिकशक्तिग्रहोविशेषालिङ्गितव्यक्तिविशेषएवतथाप्यावापोद्वापन्यायेनपुरुषान्तरान्ग
मानयेत्येतत्श्रवणोत्तरमेवव्यक्त्यन्तराण्यानयतोदृष्ट्वाविशेषेगृहीतामपिशक्तिंतज्जात्याश्रयमात्रेव्यवस्थापयति। कारणत्वादिग्रहस्थ।
लेप्येवमेवेतिनकश्चित्सामान्यलक्षणोपयोगः। यथागोसदृशोगवयइतिशक्तिग्रहेनव्यक्तिविशेषभानंतद्वत्। तदुक्तंसरूपसूत्रेभाष्येऽव्यप
वर्गगतेश्चमन्यामहे आकृतिरभिधीयतेमहिगोरित्युक्तेव्यपवर्गोगम्यतेशुक्लानीलेत्यादीतिव्यपवर्गोविशेषः। तस्यागतिरप्रतीतिरित्यर्थः।
ननुप्रख्याःविशेषाः व्यपवर्गगत्योः कोविशेषइतिचेन्न। अनभिधीयमानापिजातिः सन्निधिमात्रेणप्रख्यायाअविशेषेनिमित्तंभवति प्रख्या
याअविशेषस्तदेवेदंज्ञानमितिप्रत्यभिज्ञाविषयत्वंतेनैकत्वेजातिपदार्थेचसिद्धेपिअभिधानासिद्धिः। तथावनमितिसर्वविशेषाभ्यन्तरीक
रणेनाव्यपवर्गगतावपिप्रख्यायाअविशेषोनास्तिभिन्नवृक्षालम्बनत्वादवनमितिप्रत्ययस्य यथाम्रवनंपलाशवनमित्यादिज्ञानेषुतदे
वेदंज्ञानमितिप्रत्यभिज्ञाभावादितिकैयटेनैवसमाधानात्। अतएवसामान्यशक्तात्पदाद्विशेषव्यक्तिबोधेलक्षणेतिवृद्धाः। साचशब्दत।

न्मात्रस्यैव परिणामविशेष आकाशवद्विभुः। सा च जातिः सर्वत्र आकाशजातिसमवायादेरप्यौपाधिकानेकत्वात्। तदुक्तं हरिणा। संयोगि द्रव्यभेदेन देशेच परिकल्पिते। तेषु देशेषु सामान्यमाकाशस्यापि विद्यते इति। आकाशे त्वुपलक्षणम्। अर्थजात्यभिधानेपि सर्वे जात्यभिधायिनः। व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिता इति च। जात्यभिधायिनः जातिविशिष्टवाचकाः व्यापारलक्षणाः प्रयोजनज्ञाप्याः शब्दस्यान्वयिरूपमनवच्छेदेकीकृत्यप्रत्यायकत्वात्। एवं च निःसामान्यानि सामान्यानीत्यनादेयं सामान्यानीत्यस्य शब्दस्याबोधकत्वात्। किंच ब्रह्मण एव प्रमाणसिद्धतया सर्वे भावा ब्रह्मरूपाः शक्तिभूता न तु ततो भिन्नास्तत्र यथाव्यवहारं शक्तिकल्पनेति सर्वत्र जातिद्रव्यविभागः। आकाशत्वं घटत्वमित्यादिव्यवहारस्य तुल्यत्वात्। न च त्वत्कर्णशष्कुल्यवच्छिन्ननभस एव न तु श्रोत्रत्वमिति मतं श्रोत्रत्वजातिवत्। सा च जातिरुत्पत्तेः प्राक् नाशोत्तरं च सूक्ष्मरूपेणाश्रये व्यवतिष्ठत इति नित्यत्वं तस्याः। अनुगताकारज्ञानजनकं व्यक्तीनां यत्किंचिद्रूपं तत्सर्वं जातिः। एवं च जातिरूपाधिरिति पर्यायाविति हेलाराजः। सर्वजातीनां व्यापकत्वेपि पदार्थानां विचित्रशक्तिकलत्वात्क्वचिदेव जातिं कश्चित्पदार्थोभिव्यनक्ति न सर्वो सर्वः। सा च कदाचिन्नीलत्वयुक्तेन पिण्डेन व्यज्यते कदाचित्तु रक्तत्वयुक्तेन कदाचिदेकाधारस्य कदाचिदनेकाधारस्येति बोध्यम्। तस्याः प्राधान्येपि स्वाश्रयसमवेतत्वेन संख्यादेस्तत्र बोधात्। तल्लिङ्गवचनोपपत्तिर्गुणवचनशब्दवदिति सरूपसूत्रे भाष्ये स्पष्टं। सा च नित्येत्युक्तम्। अत एव भाष्ये सिद्धे शब्दार्थसंबन्धे इति वार्तिके सिद्धशब्देऽर्थं चेति विग्रहः कंप

दार्थसत्त्वेति प्रश्ने आकृतिमित्याह। आकृतिर्हि नित्या द्रव्यमनित्यम्। अत्राकृतिपदेन जातिसंस्थाने चोभयमपि निरूप्यमनयोर्यथा नित्यत्वं तथाग्रे वक्ष्यते। अथवा द्रव्य एव पदार्थ एष विग्रहो न्याय्यः सिद्धे शब्देऽर्थे संबन्धे चेति द्रव्यं हि नित्यमाकृतिरनित्या। एवं हि दृश्यते लोके मृत्कयाचिदाकृत्या युक्ता पिण्डः पिण्डाकृतिमुपमृद्य घटिका इत्यादि। अत्र कैयटः तत्तदाकारं तद्व्यङ्ग्यजातिरूपं वा सत्यमुपाधिमाश्रित्य तदवच्छिन्नं ब्रह्मैव द्रव्यम्। एतेन मृदोऽप्यनित्यत्वाद् द्रव्यं नित्यमित्युक्तमित्यपास्तम्। मृदोऽप्याकारमात्रत्वात् ब्रह्मण्येव पर्यवसानात्। वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतिवत्। आकृतिः संस्थानं तस्यानित्यत्वे तद्व्यङ्ग्या जातिरप्यनित्येति एतत्तात्पर्यम्। आकृतावपि पदार्थे एष विग्रहो न्याय्यः। ननु चोक्तमाकृतिरनित्येति नैतत्। नित्या आकृतिः कथं न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति द्रव्यान्तरस्था तूपलभ्यत इति। अत्राकृतिशब्देन जातिः। उपरमोऽनभिव्यक्तिः। आविष्ठकः पदार्थो जातिर्यावद्व्यवहारं ध्रुवत्वात्कूटस्थत्वादविचालित्वादनपायोपजनविकारित्वाद्वारंवारमुत्पत्त्याद्यभावेनानुत्पत्त्यवृद्ध्यव्यययोगित्वान्नित्येनेन ज्ञावः। एतदेवाभिप्रेत्य भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नमिति जातिरूपसामान्यलक्षणमुक्तम्। अथावयवसंस्थानरूपाया आकृतेरुक्तहेत्वभावात्प्रकारान्तरेण नित्यत्वमाह। अथवा यस्मिंस्तत्त्वेन विहन्यते तदपि नित्यं तस्य भावस्तत्त्वम्। आकृतावपि तत्त्वं न विहन्यत इति। अवयवसंस्थानरूपाया आकृतेः प्रवाहाविच्छेदात्तद्धर्मस्याविघात इति आशयेनानेन प्रवाहनित्यतोक्ता। प्रवाहनित्यतो न्यायवार्त्तिककारोऽप्याह नित्या वर्णा नित्या वेदा इति च संप्रदायाविच्छेदात्।

नित्या पृथिवी नित्याः पर्वतादयो नेवत्। तान्येव वेदवाक्यानि मन्वंतरचतुर्युगान्तरेष्वपि संप्रदायाविच्छेदेन प्रवर्त्तन्ते। एतन्मन्त्रादिवाक्येष्वपि तुल्यमिति। व्याससूत्रमपि समाननामरूपत्वाच्चावृत्तावप्यविरोध इति वेदस्य तदर्थानां च नामरूपप्रवाहानुच्छेद एव नित्यत्वमिति तदर्थः। उपाधिसन्निवेशादिशब्दे श्चोपाधीनामपि तदात्मकत्वात् इहैव वाच्यम्। यत्तु अविद्याशब्देनापि विच्छिन्नप्रकाशं ब्रह्मैव विच्छेदोऽपि न द्रूपश्चेत्तिनाहैनहानिरिति, अत्र वदन्ति· विच्छेदस्य ब्रह्मरूपत्वे तत्वज्ञाननिवर्त्यतानापत्तिरिति। वस्तुतस्तु विच्छेदोऽसत्य एव रज्जूरगवत् सर्वोऽपि प्रपञ्च एवमेव तत्तज्जीवगतपरम्परागत प्राण्यदृष्टवासनासहकारेण ब्रह्मणस्तथा विवर्त्तः। एवं च तन्नाश्यतो पपन्नेतीति प्रपञ्चितं पूर्वत्र परमार्थसारविवरणे चास्माभिः। यथा स्वप्ने एकस्यैवान्तःकरणस्य विरुद्धानेकपदार्थरूपत्वं तथा जागरे मायासहकारेण ब्रह्मणस्तथात्वं यथा च जागरे ऽप्रतीयमानत्वात्स्वाप्नस्य मिथ्यात्वं न तथा तुरीयदशायामननुवृत्तेरस्य प्रपञ्चस्य मिथ्यात्वं संविदश्च सत्यत्वं सोपाधिवैशिष्ट्येन तदेव सर्वव्यवहारास्पदम्। निरुपाधिकं तु सर्वव्यवहाराविषय इति हेलाराजः। आकृतिरक्तयमसंभवतितत्रैव गौतमीये जात्याकृतिव्यक्तयः पदार्थ इति सूत्रे व्यक्तिपदेन च संख्यादिविशिष्टा व्यक्तिः पिण्डकमय्यो गाव इत्यादावाकृतिरेव। वस्तुतस्तु नापि जातिः प्राण्याश्रितत्वेनाभिव्यक्तानु पुण्यपापसाधनम्। तदुक्तं हरिणा। चित्रादिष्वप्यभिव्यक्तिर्जातीनां कैश्चिदिष्यते प्राण्याश्रितास्तु ताः प्रातौ निमित्तं पुण्यपापयोरिति। चित्रादि इत्यादिना प्रतिमाः प्राण्याश्रिता इति प्राणिपदं कृतदेवतावाहनप्रतिमोपलक्षणम्। विसर्जने तु स

तेनपुण्यपापसाधनम्।ब्राह्मणत्वादयोभावाःसर्वत्रैवचतेस्थिताः अभिव्यक्ताःस्वकार्याणांसाधकाइतिचस्मृतिरितिचयत्नैवोपदेशा
दिनाभिव्यक्तास्तत्रैवस्वकार्यसाधकाःप्रतिनियतव्यञ्जकव्यङ्ग्यत्वादितिभावः।सरूपसूत्रेभाष्येध्वनितंसर्वमेतत्।स्वर्गापूर्वदेवताश
ब्दादीनामाकृतिर्बोध्या।दर्शनाभ्याससहकारेणैवतद्बोधात्।नव्यनैयायिकग्रन्थेप्रकृतिप्रत्ययार्थविचारस्तुव्याकरणवासनावासितान्तः
करणतयातत्रैववास्तवत्वभ्रमेणेतिबोध्यम्।अनन्तावर्णाउत्पादविनाशशालिनस्तत्समूहश्चपदंबोधकमितिपक्षेतुपदानामानन्त्या
च्छक्तिग्रहासंभवेनानुगताकारप्रतीत्यासिद्ध्यास्तत्तत्पदगतघटपटत्वादिजातेर्वाचकत्वम्·अर्थगतजातेःशक्यत्ववत्।यथाचश्र
मणत्वादिजातिस्तत्तत्कर्मक्रियाप्रत्यक्षव्यङ्ग्याएवमेषापिचरमवर्णप्रत्यक्षव्यङ्ग्याक्रियासमुदायेबोद्धेश्रमणत्ववदेषापितादृशेवर्णसमुदा
येव्यासज्यवृत्तिः।तदुक्तमनेकव्यक्त्यभिव्यङ्ग्याजातिःस्फोटइतिस्मृतेति।यद्वाशक्यतावच्छेदकेशक्तेरिवशक्ततावच्छेदकेऽपितस्याःस
त्त्वमितितस्याःस्फोटत्वव्यवहारः॥ ॥इतिजातिस्फोटनिष्कर्षः॥ ॥परेतुयथाऽद्वैतिनामात्मभेदऔपाधिकोमायाकृतश्चेतनस्यैकत्वेऽप्यस्यैवा
तत्रानुगमार्थंजातिकल्पनाचदृश्यतेतथैकस्यैवतत्तत्कालतत्तद्रूपानुरागरूपोपाधिभेदेनानन्त्यात्तस्मिन्नपिअनुगतशक्तिग्रहायजातिरा
वश्यिकापरंतेषांतत्तदुपाध्यवच्छिन्नस्फोटोव्यक्तिपदभाक् तत्तदुपाध्युपलक्षितश्चजातिपदभाक्पूर्वमतेतुजातिःपदार्थान्तरम्।एतत्तुस
र्वत्रव्यक्तिरनित्यातत्तद्व्यक्त्युपहितंब्रह्मैवजातिरितितत्त्वम्।आविद्यकानन्तव्यक्तिकल्पनापेक्षयाजात्यादेरेवतत्त्वकल्पनेलाघवात्।अतएवा

ग्नेरग्नित्वमपागादित्यादिश्रुतौ धर्मस्यैवं नाश उक्तः। अत एव च सिद्धे शब्दार्थसंबन्धे इति वार्तिके आविद्यकः पदार्थो जातिर्या व्यवहारनित्यप्र
वाहमित्यावेनि हेधैवाकृतेर्नित्यत्वमुक्तं तच्चोपपादितमित्याहुः॥ ॥इति वाच्यवाचकशक्तीनां निर्णयः॥ ॥वाक्यसमयग्राहिका चाकाङ्क्षा
।सा चैकपदार्थज्ञाने तदर्थान्वययोग्यार्थस्य यज्ज्ञानं तद्विषयेच्छा। अस्यान्वय्यर्थः क इत्येवंरूपा पुरुषनिष्ठैव तथापि तस्या आकाङ्क्षाविषयेऽर्थे
आरोपः। एतदेवाभिधानापर्यवसानमित्युच्यते। अयमर्थोऽर्थान्तरसाकाङ्क्ष इति व्यवहारात्तु। परे तु नारोपः मानाभावात्। अर्थबोधोत्तरमेव जि
ज्ञासोदयाच्च पदं साकाङ्क्षमिति तु साकाङ्क्षार्थबोधकमित्यर्थकम्। तदुक्तं समर्थसूत्रे भाष्ये परस्परव्यपेक्षा सामर्थ्यमेके। का पुनः शब्द
योर्व्यपेक्षा न ब्रूमः शब्दयोरिति किं तर्हि अर्थयोः इह राज्ञः पुरुषस्त्वमुक्ते राजा पुरुषमपेक्षते ममायमिति पुरुषो राजानमपेक्षतेऽहमस्येतीति।
ईदृशजिज्ञासोत्थापकत्वं चैकपदार्थे परपदार्थव्यतिरेकप्रयुक्तस्यान्वयबोधाजनकत्वस्य ज्ञानमिति तद्विषयेत्ता दृशान्वयबोधाजनकत्वे व्या
काङ्क्षेति व्यवहारः। एतज्ज्ञानस्य बोधहेतुत्वादेकवारमन्वयबोधे जाते तदजनकत्वज्ञानाभावान्न पुनरन्वयबोधः कार्यसहवर्तित्वेनैव
तस्य हेतुत्वान्न सर्वत्र बोधद्वयम्। अन्यथा प्रथमबोधहेतोस्तज्ज्ञानस्य द्वितीयबोधात्पूर्वमपि सत्त्वेन तद्दुर्वारं स्यात्। अन्वयबोधश्च तद
दाकाङ्क्षितसकलक्रियाकारकादिविषयो विवक्षितः। एतेन तस्य हेतुत्वे खण्डवाक्यार्थबोधोत्तरं महावाक्यार्थबोधो न स्यादित्यपास्तम्।
खण्डबोधस्य क्रियातद्विशेषणकारकतद्विशेषणेतदन्यतरमात्रविषयकत्वात्। अत एव सुरतक्रीडापिकीनां रवः कङ्कणक्वाणः प्रेम

तन्नोत्तु बोनक्यबोलास्यापर्वेणुस्वनद्भुत्याद्रौसमा मनुष्यात्तस्यदोषतोकालंकारिकैः।क्रियाकारकभावेनान्वयबोधकसकलपदोक्यनन्तरं
तद्घटकयत्किंचिदन्यपि विशेषणोपादानं हि समाप्तपुनरात्तम्। यद्यपि सतितात्पर्येआकांक्षाबोधद्वयमिदमेवतथापिसैवात्रदूषकताबी
जम्। एवन्मूलिकैव सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति व्युत्पत्तिः। किंचतत्कस्यान्वयबोधाजनकत्वज्ञानस्य वक्ष्यमाणसमभि॰
व्याहारकारणता ज्ञानमूलकत्वात्साप्याकाङ्क्षा अनयोस्समभिव्याहारस्तादृशनादृशान्वयबोधजनकइति ज्ञानंकारणंतदज्ञानताद्
बोधाच्च। अतएवयस्ययादृशसमभिव्याहारे यादृशान्वयबोधकत्वग्रहस्तस्यततस्तादृशान्वयबोधइत्यनुभवसिद्धंससमभिव्याहा
रस्तत्तदन्वयबोधजनकइत्यन्वयमेववाक्यविषयेऐश्वरःसमयः तत्परिपालिकाचमीमांसा ।अतएवघटःकर्मत्वमानयनं कृतिरित्यतो
विपरीतव्युत्पन्नस्य बोधः सद्व्युत्पन्नस्यचाबोधउपपद्यते। सद्व्युत्पन्नत्वंचव्याकरणशास्त्रोक्तप्रकृतिप्रत्ययविभागतत्तदर्थविभा
गतत्तदन्वयबोधविषयकज्ञानवत्त्वम्। अन्वयानुभवस्वस्वरूपसन्तत्तत्समभिव्याहारजन्यान्वयबोधान्तरेप्रतिबन्धकस्तन्मूलक
मन्वयबोधाजनकत्वज्ञानमपिबाहेतुरितितन्मूलिकैवसकृदुच्चरितइतिव्युत्पत्तिः।नादृशबोधेच्छयोच्चरितत्वरूपतात्पर्यज्ञानेसत्य
पितत्तत्समभिव्याहारे तत्तज्जनकत्वज्ञानाभावे बोधादर्शनान्नतात्पर्येणास्या अन्यथासिद्धिः सत्यप्यस्यतात्पर्यं बोधकमितिव्यव॰
हाराच्च। तच्चायंव्युत्पन्नस्यक्रियाकारकादिपदघटितः सामान्यतएवेत्युक्तम्। व्युत्पन्नस्याश्रुतवाक्यादपिबोधदर्शनात् प्रतिवाक्यंतथाग्रह

ल.म. ६२

स्यासंभवाच्च। पदभेदेन व्युत्पत्तिभेद इत्यस्य च नामपदद्वय नामाख्याताख्यात निपातनिपातनामादिभेदेन तत्तत्पदसमुदाये व्युत्पत्तिभे
द इत्येवार्थः सचाग्रे तत्र तत्रैव वक्ष्यते। उत्थापकताविषयतान्यतरसंबन्धेनोभयसंबन्धेन वा जिज्ञासाविशिष्टः साकाङ्क्ष इत्युच्यते। तत्रा
न्त्यं पचति तण्डुलं देवदत्त इति क्रियाकारकयोर्द्वयोरपि परस्परं तदुत्थापकत्वात्तद्विषयत्वाच्च। आद्यं पश्य मृगो धावतीति। अत्र पश्यार्थ
स्य कारकधावनाकाङ्क्षोत्थापकत्वं धावनं तु न तद्विषय एवं ईदृशस्थले क्रियाकारकसंबन्धो वाक्यशक्य एव। अत एव विभाषा साकाङ्क्ष इ
ति सूत्रभाष्ये स्थयिन्याकाङ्क्षेति च साकाङ्क्षमिति उक्तम्। अस्मिन्निति विषयसप्तमीत्यलम्। यत्तु अर्थनिष्ठयोग्यतापि शाब्दबोधे का
रणं सा च तात्पर्यविषयीभूतसंसर्गवृत्तिधर्मे संसर्गतावच्छेदकावच्छिन्नसंबन्धिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावः। तेन विशिष्टा
भावादिकमादाय न दोषः। तज्ज्ञानं कारणं संसर्गज्ञानं तु तात्पर्यविषयतयाकाङ्क्षाज्ञानविषयतया वा सुलभम्। यद्वा प्रतियोगितावच्छेदक
त्वरूपायोग्यतानिश्चयो बोधप्रतिबन्धक इति तन्न। शब्दप्रयोज्यबोधे बाधज्ञानस्याप्रतिबन्धकत्वात् तदभावज्ञानस्याकारणत्वाच्च। सत्यपि
बाधनिश्चयेऽस्य श्रोणिपत्तः पराधर्परमालक्ष्मीकृताः संख्यया एवं बन्ध्यासुतो यातीत्यादितो बोधदर्शनात्। किंचैवं वह्निना सिञ्चतीत्यतो बो
धाभावे तद्वाक्यप्रयोक्तुरद्वेषे च वह्निना कथं सेकं ब्रवीषीत्युपहासः श्रोतृभिः क्रियमाणः संगतः स्यात्। एतदर्थकद्रविडभाषाश्रवणोत्तरं पाम्मा
त्यस्येव मूकत्वात स्यस्यात्। किंचैवं प्रतिवादे प्रतिवादिशब्दस्याबोधकत्वेन तत्खण्डनकथोच्छेदः। न चैवमादृशे पुनरन्वयबोधः किंतु पदार्थ

राम. ६१

42